१५११ श्रींग्श् पाके ।
१५१२ मींग्श् हिंसायाम् ।
१५१३ युंग्श् बन्धने ।
१५१४ स्कुंग्श् आप्रवणे ।
१५१५ क्नूग्श् शब्दे ।
१५१६ द्रूग्श् हिंसायाम् ।
१५१७ ग्रहीश् उपादाने ।
१५१८ पूग्श् पवने ।
१५१९ लूग्श् छेदने ।
१५२० धूग्श् कम्पने ।
१५२१ स्तॄग्श् आच्छादने ।
१५२२ कॄग्श् हिंसायाम् ।
१५२३ वॄग्श् वरणे ।

॥ इति उभयतोभाषाः ॥

---

१५२४ ज्यांश् हानौ ।
१५२५ रींश् गति-रेषणयोः ।
१५२६ लींश् श्लेषणे ।
१५२७ व्लींश् वरणे ।
१५२८ ल्वींश् गतौ ।
१५२९ कॄ १५३० मॄ
१५३१ शॄश् हिंसायाम् ।
१५३२ पॄश् पालन-पूरणयोः ।
१५३३ बॄश् मरणे ।
१५३४ मॄश् मर्जने च ।
१५३५ दॄश् विदारणे ।
१२३६ जॄश् वयोहानौ ।
१५३७ नॄश् नये ।
१५३८ गॄश् शब्दे ।
१५३९ ॠश् गतौ ।

॥ वृत् प्वादिः ॥

॥ वृत् ल्वादिः ॥

---

१५४० ज्ञांश् अवबोधने ।
१५४१ क्षिप्श् हिंसायाम् ।
१५४२ व्रींश् वरणे ।
१५४३ भ्रींश् भरणे ।
१५४४ हेठश् भूतप्रादुर्भावे ।
१५४५ मृडश् सुखने ।
१५४६ अन्थश् मोचन-प्रति-हर्षयोः ।
१५४७ मन्थश् विलोडने ।
१५४८ ग्रन्थश् संदर्भे ।
१५४९ कुन्थश् संक्लेशे ।

१५५० मृदश् क्षोदे ।
१५५१ गुधश् रोषे ।
१५५२ बन्धंश् बन्धने ।
१५५३ क्षुभश् संचलने ।
१५५४ णभ् १५५५ तुभश् हिंसायाम् ।
१५५६ खवश् हेठश्चवत् ।
१५५७ क्लिशौश् विबाधने ।
१५५८ अशश् भोजने ।
१५५९ इषश् आभीक्ष्ण्ये ।
१५६० विषश् विप्रयोगे ।
१५६१ प्रुष् १५६२ प्लुषश् स्नेह-सेचन-पूरणेषु ।
१५६३ मुषश् स्तेये ।
१५६४ पुषश् पुष्टौ ।
१५६५ कुषश् निष्कर्षे ।
१५६६ ध्रसूश् उञ्छे ।

॥ इति परस्मैभाषाः ॥

१५६७ वृङ्श् सम्भक्तौ ।

॥ इति आत्मनेभाषाः ॥

॥ इति क्र्यादयः शितो धातवः ॥

१५६८ चुरण् स्तेये ।
१५६९ पृण् पूरणे ।
१५७० घृण् स्रवणे ।
१५७१ श्वल्क १५७२ वल्कण् भाषणे ।
१५७३ नक्क १५७४ धक्कण् नाशने ।
१५७५ चक्क १५७६ चुक्कण् व्यथने ।
१५७७ टकुण् बन्धने ।
१५७८ अर्कण् स्तवने ।
१५७९ पिचण् कुट्टने ।
१५८० पचुण् विस्तारे ।
१५८१ म्लेच्छण् म्लेच्छने ।
१५८२ ऊर्जण् बल-प्राणनयोः ।
१५८३ तुजु १५८४ पिजुण् हिंसा-बल-दान-निकेतनेषु ।
१५८५ क्षजुण् कृच्छ्रजीवने ।
१५८६ पूजण् पूजायाम् ।
१५८७ गज १५८८ मार्जण् शब्दे
१५८९ तिजण् निशाने ।
१५९० वज १५९१ व्रजण् मार्गणसंस्कारगत्योः ।

१५९२ रुजण् हिंसायाम् ।
१५९३ नटण् अवस्यन्दने ।
१५९४ तुट १५९५ चुट
१५९६ चुट्ट १५९७ छुटण् छेदने।
१५९८ कुट्टण् कुत्सने च ।
१५९९ पुट्ट १६०० चुट्ट
१६०१ षुट्टण् अल्पीभावे ।
१६०२ पुट १६०३ मुटण् संचूर्णने ।
१६०४ अट्ट १६०५ स्मिटण् अनादरे ।
१६०६ लुण्टण् स्तेये च ।
१६०७ स्निटण् स्नेहने ।
१६०८ घट्टण् चलने ।
१६०९ खट्टण् संवरणे ।
१६१० षट्ट १६११ स्फिट्टण् हिंसायाम् ।
१६१२ स्फुटण् परिहासे ।
१६१३ कीटण् वर्णने ।
१६१४ वटुण् विभाजने ।
१६१५ रुटण् रोषे ।
१६१६ शठ १६१७ श्वठ
१६१८ श्वठुण् संस्कार-गत्योः ।
१६१९ शुठण् आलस्ये ।
१६२० शुठुण् शोषणे ।
१६२१ गुठुण् वेष्टने ।
१६२२ लडण् उपसेवायाम् ।
१६२३ स्फुडुण् परिहासे ।
१६२४ ओलडुण् उत्क्षेपे ।
१६२५ पीडण् गहने ।
१६२६ तडण् आघाते ।
१६२७ खड १६२८ खडुण् भेदे।
१६२९ कडुण् खण्डने च ।
१६३० कुडुण् रक्षणे ।
१६३१ गुडुण् वेष्टने च ।
१६३२ चुडुण् छेदने ।
१६३३ मडुण् भूषायाम् ।
१६३४ भडुण् कल्याणे ।
१६३५ पिडुण् संघाते ।
१६३६ ईडण् स्तुतौ ।
१६३७ चडुण् कोपे ।
१६३८ जुड १६३९ चूर्ण
१६४० वर्णण् प्रेरणे ।
१६४१ चूण १६४२ तुणण् संकोचने ।

१६४३ श्रणण् दाने ।
१६४४ पूणण् सघाते ।
१६४५ चितुण् स्मृत्याम् ।
१६४६ पुस्त १६४७ बुस्तण् आदरा-ऽनादरयोः ।
१६४८ मुस्तण् संघाते ।
१६४९ कृतण् संशब्दने ।
१६५० स्वर्त १६५१ पथुण् गतौ ।
१६५२ श्रथण् प्रतिहर्षे ।
१६५३ पृथण् प्रक्षेपणे ।
१६५४ प्रथण् प्रख्याने ।
१६५५ छदण् संवरणे ।
१६५६ चुदण् संचोदने ।
१६५७ मिदुण् स्नेहने ।
१६५८ गुर्दण् निकेतने ।
१६५९ छर्दण् वमने ।
१६६० बुधुण् हिंसायाम् ।
१६६१ वर्धण् छेदन-पूरणयोः ।
१६६२ गर्धण् अभिकाङ्क्षायाम् ।
१६६३ बन्ध १६६४ बधण् संयमने ।
१६६५ छपुण् गतौ ।
१६६६ क्षपुण् क्षान्तौ ।
१६६७ छूपण् समुच्छ्राये ।
१६६८ डिपण् क्षेपे ।
१६६९ ह्वपण् व्यक्तायां वाचि ।
१६७० डपु १६७१ डिपुण् संघाते ।
१६७२ शूर्पण् माने ।
१६७३ शुल्बण् सर्जने च ।
१६७४ डबु १६७५ डिबुण् क्षेपे ।
१६७६ सम्बण् सम्बन्धे ।
१६७७ कुबुण् आच्छादने ।
१६७८ लुबु १६७९ तुबुण् अर्दने ।
१६८० पुर्वण् निकेतने ।
१६८१ यमण् परिवेषणे ।
१६८२ व्ययण् क्षये ।
१६८३ यत्रुण् संकोचने ।
१६८४ कुद्रुण् अनृतभाषणे ।
१६८५ श्वभ्रण् गतौ ।
१६८६ तिलण् स्नेहने ।
१६८७ जलण् अपवारणे ।
१६८८ क्षलण् शौचे ।

१६८९ पुलण् समुच्छ्राये ।
१६९० बिलण् भेदे ।
१६९१ तलण् प्रतिष्ठायाम् ।
१६९२ तुलण् उन्माने ।
१६९३ दुलण् उत्क्षेपे ।
१६९४ बुलण् निमज्जने ।
१६९५ मूलण् रोहणे ।
१६९६ कल १६९७ किल
१६९८ पिलण् क्षेपे ।
१६९९ पलण् रक्षणे ।
१७०० इलण् प्रेरणे ।
१७०१ चलण् भृतौ ।
१७०२ सान्त्वण् सामप्रयोगे ।
१७०३ धूश्रण् कान्तीकरणे ।
१७०४ श्लिषण् श्लेषणे ।
१७०५ लूषण् हिंसायाम् ।
१७०६ रुषण् रोषे ।
१७०७ प्युषण् उत्सर्गे ।
१७०८ पसुण् नाशने ।
१७०९ जसुण् रक्षणे ।
१७१० पुंसण् अभिमर्दने ।
१७११ त्रूस १७१२ पिस
१७१३ जस १७१४ बर्हण्
हिंसायाम् ।
१७१५ ष्णिहण् स्नेहने ।
१७१६ म्रक्षण् म्लेच्छने ।
१७१७ भक्षण् अदने ।
१७१८ पक्षण् परिग्रहे ।
१७१९ लक्षीण् दर्शनाङ्कनयोः ।

इतोऽर्थविशेषे आलक्षिणः ।
१७२० ज्ञाण् मारणादिनियोजनेषु ।
१७२१ च्युण् सहने ।
१७२२ भूण अवकल्कने ।
१७२३ बुक्कण भषणे ।
१७२४ रक १७२५ लक
१७२६ रग १७२७ लगण्
आस्वादने ।
१७२८ लिगुण् चित्रीकरणे ।
१७२९ चर्चण अध्ययने ।
१७३० अंशण् विभाजने ।
१७३१ मुचण् प्रमोचने ।
१७३२ अर्जण् प्रतियत्ने ।
१७३३ भजण् विश्राणने ।
१७३४ चट १७३५ स्फुटण् भेदे ।

१७३६ घटण् संघाते
(हन्त्यर्थाश्च)
१७३७ कणण् निमीलने ।
१७३८ यतण् निकारोपस्कारयो.।
(निरश्च प्रतिदाने ।)
१७३९ शब्दण् उपसर्गाद् भाषा-
विष्कारयोः ।
१७४० पूदण् आस्रवणे ।
१७४१ आङः क्रन्दण् सातत्ये ।
१७४२ ष्वदण् आस्वादने ।
[आस्वदः सकर्मकात्]
१७४३ मुदण् संसर्गे ।
१७४४ शृघण् प्रसहने ।
१७४५ कृपण् अवकल्पने ।
१७४६ जसुण् नाशने ।
१७४७ अमण् रोगे ।
१७४८ चरण् असंशये ।
१७४९ पूरण् आप्यायने ।
१७५० दलण् विदारणे ।
१७५१ दिवण् अर्दने ।
१७५२ पश १७५३ पषण्
वन्धने ।
१७५४ पुषण् धारणे ।
१७५५ घुषृण् विशब्दने ।
(आङः क्रन्दे ।)
१७५६ भूष १७५७ तसुण्
अलंकारे ।
१७५८ जसण् ताडने ।
१७५९ त्रसण् वारणे ।
१७६० वसण् स्नेह-छेदा-ऽवहरणेषु।
१७६१ ध्रसण् उत्क्षेपे ।
१७६२ ग्रसण् ग्रहणे ।
१७६३ लसण् शिल्पयोगे ।
१७६४ अर्हण् पूजायाम् ।
१७६५ मोक्षण् असने ।
१७६६ लोकृ १७६७ तर्क
१७६८ रघु १७६९ लघु
१७७० लोचृ १७७१ विछ
१७७२ अजु १७७३ तुजु
१७७४ पिजु १७७५ लजु
१७७६ लुजु १७७७ भजु
१७७८ पट १७७९ पुट
१७८० लुट १७८१ घट
१७८२ घट्ट १७८३ वृत
१७८४ पुथ १७८५ नद

१७८६ वृष १७८७ गुप
१७८८ धूप १७८९ कुप
१७९० चीव १७९१ दशु
१७९२ कुशु १७९३ त्रसु
१७९४ पिसु १७९५ कुसु
१७९६ दसु १७९७ वर्ह
१७९८ वृहु १७९९ वल्ह
१८०० अहु १८०१ वहु
१८०२ महुण् भासार्थाः ।
॥ इति परस्मैभाषाः ॥

---

१८०३ युणि जुगुप्सायाम् ।
१८०४ गृणि विज्ञाने ।
१८०५ वञ्चिण् प्रलम्भने ।
१८०६ कुटिण् प्रतापने ।
१८०७ मदिण् तृप्तियोगे ।
१८०८ विदिण् चेतना-ऽऽख्यान-निवासेषु ।
१८०९ मनिण् स्तम्भे ।
१८१० वलि १८११ मलिण् आमण्डने ।
१८१२ दिविण् परिकूजने ।
१८१३ वृषिण् शक्तिबन्धे ।
१८१४ कुत्सिण् अवक्षेपे ।
१८१५ लक्षिण् आलोचने ।
१८१६ हिष्कि १८१७ किष्किण् हिंसायाम् ।
१८१८ निष्किण् परिमाणे ।
१८१९ तर्जिण् संतर्जने ।
१८२० कूटिण् अप्रमादे ।
१८२१ त्रुटिण् छेदने ।
१८२२ शठिण् श्लाघायाम् ।
१८२३ कूणिण् संकोचने ।
१८२४ तूणिण् पूरणे ।
१८२५ भ्रूणिण् आशायाम् ।
१८२६ चितिण् संवेदने ।
१८२७ वस्ति १८२८ गन्धिण् अर्दने ।
१८२९ डपि १८३० डिपि
१८३१ डम्पि १८३२ डिम्पि
१८३३ डम्भि १८३४ डिम्भिण् संघाते ।
१८३५ स्यमिण् वितर्के ।
१८३६ ऊमिण् आलोचने ।

१८३७ कुस्मिण् कुस्मयने ।
१८३८ गूरिण् उद्यमे ।
१८३९ तन्त्रिण् कुटुम्बधारणे ।
१८४० मन्त्रिण् गुप्तभाषणे ।
१८४१ ललिण् ईप्सायाम् ।
१८४२ स्पशिण् ग्रहण-श्लेषणयोः ।
१८४३ दंशिण् दशने ।
१८४४ दंसिण् दर्शने च ।
१८४५ मर्त्सिण् संतर्जने ।
१८४६ यक्षिण् पूजायाम् ।

॥ इति आत्मनेभाषाः ॥

---

१८४७ अङ्कण् लक्षणे ।
१८४८ श्लेष्कण् दर्शने ।
१८४९ सुख १८५० दुःखण् तत्क्रियायाम् ।
१८५१ अङ्गण् पद-लक्षणयोः ।
१८५२ अघण् पापकरणे ।
१८५३ रचण् प्रतियत्ने ।
१८५४ सूचण् पैशून्ये ।
१८५५ माजण् पृथक्कर्मणि ।
१८५६ समाजण् प्रीति-सेवनयोः ।
१८५७ लज १८५८ लजुण् प्रकाशने ।
१८५९ कूटण् दाहे ।
१८६० पट १८६१ वटण् ग्रन्थे ।
१८६२ खेटण् भक्षणे ।
१८६३ खोटण् क्षेपे ।
१८६४ पुटण् संसर्गे ।
१८६५ वटुण् विभाजने ।
१८६६ शठ १८६७ श्वठण् सम्यग्भाषणे ।
१८६८ दण्डण् दण्डनिपातने ।
१८६९ व्रणण् गात्रविचूर्णने ।
१८७० वर्णण् वर्णक्रिया-विस्तार-गुणवचनेषु ।
१८७१ पर्णण् हरितभावे ।
१८७२ कर्णण् भेदे ।
१८७३ तूणण् संकोचने ।
१८७४ गणण् सङ्ख्याने ।
१८७५ कुण १८७६ गुण
१८७७ केतण् आमन्त्रणे ।
१८७८ पतण् गतौ वा ।
१८७९ वातण् गति-सुखसेवनयोः ।

१८८० कथण् वाक्यप्रबन्धे ।
१८८१ श्रथण् दौर्बल्ये ।
१८८२ छेदण् द्वैधीकरणे ।
१८८३ गदण् गर्जे ।
१८८४ अन्धण् दृष्ट्युपसंहारे ।
१८८५ स्तनण् गर्जे ।
१८८६ ध्वनण् शब्दे ।
१८८७ स्तेनण् चौर्ये ।
१८८८ ऊनण् परिहाणे ।
१८८९ कृपण् दौर्बल्ये ।
१८९० रूपण् रूपक्रियायाम् ।
१८९१ क्षप १८९२ लाभण् प्रेरणे ।
१८९३ भामण् क्रोधे ।
१८९४ गोमण् उपलेपने ।
१८९५ सामण् सान्त्वने ।
१८९६ श्रामण् आमन्त्रणे ।
१८९७ स्तोमण् श्लाघायाम् ।
१८९८ व्ययण् वित्तसमुत्सर्गे ।
१८९९ सूत्रण् विमोचने ।
१९०० मूत्रण् प्रस्रवणे ।
१९०१ पार १९०२ तीरण् कर्मसमाप्तौ ।

१९०३ कत्र १९०४ गात्रण शैथिल्ये ।
१९०५ चित्रण् चित्रक्रिया-कदाचिद्दृष्ट्योः ।
१९०६ छिद्रण् भेदे ।
१९०७ मिश्रण् संपर्चने ।
१९०८ वरण् ईप्सायाम् ।
१९०९ स्वरण् आक्षेपे ।
१९१० शारण् दौर्बल्ये ।
१९११ कुमारण् क्रीडायाम् ।
१९१२ कलण् संख्यान-गत्योः ।
१९१३ शीलण् उपधारणे ।
१९१४ वेल १९१५ कालण् उपदेशे ।
१९१६ पल्यूलण्-लवन-पवनयोः ।
१९१७ अंशण् समाघाते ।
१९१८ पषण् अनुपसर्गः ।
[पषी बाधन-स्पर्शनयोः, पषण् बन्धने]
१९१९ गवेषण् मार्गणे ।
१९२० मृषण् क्षान्तौ ।
१९२१ रसण् आस्वादन-स्नेहनयोः ।
१९२२ वासण् उपसेवायाम् ।

१९२३ निवासण् आच्छादने ।
१९२४ चहण् कल्कने ।
१९२५ महण् पूजायाम् ।
१९२६ रहण् त्यागे ।
१९२७ रहुण् गतौ ।
१९२८ स्पृहण् ईप्सायाम् ।
१९२९ रुक्षण् पारुष्ये ।

॥ इति परस्मैभाषाः ॥

---

१९३० मृगणि अन्वेषणे ।
१९३१ अर्थणि उपयाचने ।
१९३२ पदणि गतौ ।
१९३३ संग्रामणि युद्धे ।
१९३४ शूर १९३५ वीरणि विक्रान्तौ ।
१९३६ सत्रणि सन्दानक्रियायाम् ।
१९३७ स्थूलणि परिबृंहणे ।
१९३८ गर्वणि माने ।
१९३९ गृहणि ग्रहणे ।
१९४० कुहणि विस्मापने ।

॥ इति आत्मनेभाषाः ॥

---

१९४१ युजण् संपर्चने ।
१९४२ लीण् द्रवीकरणे ।
१९४३ मीण् मतौ ।
१९४४ प्रीगण् तर्पणे ।
१९४५ धूगण् कम्पने ।
१९४६ वृगण् आवरणे ।
१९४७ जॄण् वयोहानौ ।
१९४८ चीक १९४९ शीकण् आमर्षणे ।
१९५० मार्गण् अन्वेषणे ।
१९५१ पृचण् संपर्चने ।
१९५२ रिचण् वियोजने च ।
१९५३ वचण् भाषणे ।
१९५४ अर्चिण् पूजायाम् ।
१९५५ वृजैण् वर्जने ।
१९५६ मृजौण् शौचा-ऽलङ्कारयोः ।
१९५७ कठुण् शोके ।
१९५८ श्रन्थ १९५९ ग्रन्थण् सन्दर्भे ।
१९६० क्रथ १९६१ अर्दिण् हिंसायाम् ।
१९६२ श्रथण् बन्धने च ।
१९६३ वदिण् भाषणे ।
(संदेशने इत्यन्ये ।)

१९६४ छदण् अपवारणे ।
१९६५ आङः सदण् गतौ ।
१९६६ क्रूदण् संदीपने ॥
१९६७ शुन्धिण् शुद्धौ ।
१९६८ तनूण् श्रद्धाघाते ॥
(उपसर्गाद् दैर्घ्ये ।)
१९६९ मानण् पूजायाम् ॥
१९७० तपिण् दाहे ॥
१९७१ तृपण् प्रीणने ॥
१९७२ आप्लृण् लम्भने ।
१९७३ त्रसैण् भये ।
१९७४ ईरण् क्षेपे ।
१९७५ मृषिण् तितिक्षायाम् ।
१९७६ शिषण् असर्वोपयोगे ॥
(विपूर्वो अतिशये ॥)
१९७७ जुषण् परितर्कणे ॥
१९७८ धृषण् प्रसहने ॥
१९७९ हिसुण् हिंसायाम् ।
१९८० गर्हण् विनिन्दने ।
१९८१ षहण् मर्षणे ।
*बहुलमेतन्निदर्शनम् ॥
वृत् युजादिः परस्मैभाषाः ॥
॥ इत्याचार्यहेमचन्द्रानुस्मृता
चुरादयो णितो धातवः ॥

*यदेतद् भवत्यादिधातुपरिगणनं तद्बाहुल्येन निदर्शनत्वेन ज्ञेयम् ॥ तेनाऽत्राऽपठिता अपि क्विप्रभृतयो लौकिकाः, स्तम्भूप्रभृतयः सौत्राश्चुलुम्पादयश्च वाक्यकरणीया धातव उदाहार्याः । वर्धन्ते हि धातुगण –

(क्विप्रभृतयो लौकिका धातवः)
१९८२ क्वि विच्छायीभवने ।
१९८३ क्षीङ्च् क्षये ।
१९८४ मृगच् अन्वेषणे ॥
(स्तम्भूप्रभृतयः सौत्रा धातवः)
१९८५ स्तम्भू १९८६ स्तुम्भू
१९८७ स्कम्भू १९८८ स्कुम्भू
रोधनार्थाः ।
१९८९ कगे ॥ क्रियासामान्यार्थोऽयमित्येके । अनेकार्थोऽयमित्यन्ये ॥ (सौत्रः)
१९९० जुं गतौ ॥ (सौत्रः)
१९९१ कण्डूग् गात्रविघर्षणे ।
१९९२ महीङ् वृद्धौ पूजायाञ्च ।
१९९३ हृणीङ् रोष-लज्जयोः ।
१९९४ वेङ् धौर्त्ये पूर्वभावे स्वप्ने च।

१९९५ लाङ्ग् वेङ्ग्वत् ॥
१९९६ मन्तु रोष वैमनस्ययोः ॥
१९९७ वल्गु माधुर्य-पूजयोः ॥
१९९८ असु मानसोपतापे ॥
(अत्र असू असूग् इत्येके ॥ अन्ये तु असूड् दोषाविष्कृतौ रोगे चेत्याहुः ॥)
१९९९ वेट् २००० लाट् वेङ्ग्वत् ॥
(लाङ् जीवने इत्येके ॥ वेट्लाङ् इत्यन्ये ॥)
२००१ लिट् अल्पार्थे कुत्सायाञ्च ॥
२००२ लोट् दीप्तौ ॥
(लेङ् लोङ् धौर्त्ये पूर्वभावे स्वप्ने चेत्येके॥ लेला दीप्तावित्ति केचित् ॥)
२००३ उरस् ऐश्वर्ये ॥
२००४ उषस् प्रभातीभावे ॥
२००५ इरस् ईर्ष्यायाम् ॥
(इरज् इरग् इत्यपि केचित्)
२००६ तिरस् अन्तर्द्धौ ॥
२००७ इयस् २००८ इमस्
२००९ पयस् २०१० अस्
प्रसृतौ ॥
२०११ सम्भूयस् प्रभूतभावे ॥

२०१२ दुवस् परिताप-परि-
चरणयोः ॥
२०१३ दुरज् २०१४ भिषज्
चिकित्सायाम् ॥
२०१५ भिष्णुक् उपसेवायाम् ॥
(भिष्णज् उपसेवायामित्येके)
२०१६ रेखा श्लाघा-सादनयोः ॥
२०१७ लेखा विलास-स्खलनयोः ॥
(अदन्तोऽयमित्यपरे ॥)
२०१८ एला २०१९ वेला
२०२० केला २०२१ खेला विलासे।
(इला इत्यन्ये ॥ खल इत्येके ॥)
२०२२ गोधा २०२३ मेधा
आशुग्रहणे ॥
२०२४ मगध परिवेष्टने ॥
(नीचदास्ये इत्यन्ये ॥)
२०२५ इरध २०२६ इषुध
शरधारणे ॥
२०२७ कुषुभ क्षेपे ॥
[श्रीहैमशब्दानुशासने "कुषुम्भ" इति, क्रियारत्नसमुच्चये च "कुरुभ क्षेपे" इति पाठः ॥]
२०२८ सुख २०२९ दुःख
तत्क्रियायाम् ॥

२०३० अगद निरोगत्वे ।

२०३१ गद्गद वाक्स्खलने ।

२०३२ तरण २०३३ वरण गतौ।

२०३४ उरण २०३५ तुरण त्वरायाम् ।

२०३६ पुरण गतौ ।

२०३७ मुरण धारण-पोषण-युद्धेषु।

२०३८ चुरण मति-चौर्ययोः ।

(हैमशब्दानुशासने-'चुरण' इति)

२०३९ भरण प्रसिद्धार्थः ।

२०४० तपुस २०४१ तम्पस् दुःखार्थः ।

(तन्तस पम्पस इत्यन्यत्र)।

२०४२ अरर आराकर्मणि ।

२०४३ सपर पूजायाम् ।

२०४४ समर युद्धे ।

॥ इति कण्ड्वादय. ॥

२०४५ अन्दोलण्

२०४६ प्रेङ्खोलण् अन्दोलने ।

२०४७ वीजण् वीजने ।

[एते त्रयोऽप्यदन्ताः]।

२०४८ रिखिर्लिखेः समानार्थः।

२०४९ लुल कम्पने ।

२०५० चुलुम्प विनाशे ।

**सौत्रधातुव्याख्या—**

क्रियावाचित्वे सति पाठाऽपठितत्वे सति सूत्रगृहीतत्वं सौत्रत्वम् । અર્થ—જે ક્રિયાવાચક હોય, ધાતુપાઠમાં જે કહેલ ન હોય અને સૂત્રમાં ગ્રહણ કરેલ હોય તે **સૌત્રધાતુ** કહેવાય છે.

**वाक्यकरणीयधातुव्याख्या—**

क्रियावाचित्वे सति पाठापठितत्वे सति सूत्रागृहीतत्वे सति शिष्टप्रयोगप्रयोज्यग्रहविषयत्वं वाक्यकरणीयत्वम् । અર્થઃ—જે ક્રિયાવાચિ હોય, ધાતુપાઠમાં અપઠિત હોય અને સૂત્રમાં ગ્રહણ કરેલ ન હોય છતાં શિષ્ટપ્રયોગથી પ્રયોજ્ય જ્ઞાનનો જે વિષય હોય તે **વાક્યકરણીયધાતુ** કહેવાય છે.

**लौकिकधातुव्याख्या—**

क्रियावाचित्वे सति पाठापठितत्वे सति सूत्रागृहीतत्वे सति केवललोकप्रयुक्तत्व लौकिकत्वम् । અર્થઃ—ક્રિયાવાચક છતા, ધાતુપાઠમાં જે અપઠિત હોય, સૂત્રમાં જે અગૃહીત હોય અને કેવળ લોકમાં પ્રયુક્ત હોય તે **લૌકિકધાતુ** કહેવાય છે.

॥ इति कलिकालसर्वज्ञश्रीहेमचन्द्राचार्यविरचितधातुपाठः समाप्त. ।

॥ सम्पादक—मुनिश्रीदक्षविजयसङ्कलितं प्रथमं परिशिष्टं समाप्तम् ॥

अर्हम्

# [अथ पञ्चमाध्यायः, तत्र प्रथमपादः-]



## आ तुमोऽत्यादिः कृत् ।५।१।१॥

धातोर्विधीयमानस्त्यादिवर्जो वक्ष्यमाणः प्रत्ययस्तुमभिव्याप्य 'कृत्' स्यात् । घनघात्यः । अत्यादिरिति किम्? प्रणिस्ते ॥१॥

## बहुलम् ।५।१।२॥

'कृत्' निर्दिष्टादर्थादन्यत्रापि 'बहुलं' स्यात् । पादहारकः, मोहनीयं कर्म, संप्रदानम् ॥२॥

## कर्त्तरि ।५।१।३॥

'कृत्' अर्थविशेषोक्तिं विना 'कर्त्तरि' स्यात् । कर्त्ता ॥३॥

## व्याप्ये घुर-केलिम-कृष्टपच्यम् ।५।१।४॥

'घुर-केलिमौ प्रत्ययौ कृष्टपच्यश्च" व्याप्ये कर्त्तरि स्युः । भङ्गुरं काष्ठम्, पचेलिमा माषाः, कृष्टपच्याः शालयः ॥४॥

## संगतेऽजर्यम् ।५।१।५॥

संगमनं संगतम्, तस्मिन् कर्त्तरि नञ्पूर्वात् जृषो 'यो' निपात्यते । अजर्यम् आर्यसंगतम् । सगत इति किम्? अजरः पटः ॥५॥

## रुच्या-ऽव्यथ्य-वास्तव्यम् ।५।१।६॥

एते कर्त्तरि निपात्यन्ते । रुच्यः, अव्यथ्यः, वास्तव्यः ॥६॥

## भव्य-गेय-जन्य-रम्या-ऽऽपात्या-ऽऽप्लाव्यं नवा ।५।१।७॥

एते 'कर्त्तरि वा' निपात्यन्ते । भव्यः, गेयः साम्नाम्, जन्यः, रम्य-

आपात्यः, आप्लाव्यः; पक्षे,-भव्यम्, गेयानि, सामानि, जन्यम्, रम्यम्, आपात्यम्, आप्लाव्यम् ॥७॥

प्रवचनीयाऽऽदयः ।५।१।८॥

एते अनीयप्रत्ययान्ताः 'कर्त्तरि वा' निपात्यन्ते । प्रवचनीयो गुरुः शास्त्रस्य, प्रवचनीयं गुरुणा शास्त्रम्; उपस्थानीयः शिष्यो गुरोः, उपस्थानीयः शिष्येण गुरुः ॥८॥

श्लिष-शीङ्-स्था-ऽऽस-वस-जन-रुह-जॄ-भजेः क्तः ।५।१।९॥

एभ्यः क्तो यो विहितः स 'कर्त्तरि वा' स्यात् । आश्लिष्टः कान्तां चैत्रः, आश्लिष्टा कान्ता चैत्रेण; अतिशयितो गुरुं शिष्यः, अतिशयितो गुरुः शिष्यैः; उपस्थितो गुरुं शिष्यः, उपस्थितो गुरुः शिष्यैः; उपासिता गुरुं ते, उपासितो गुरुस्तैः, अनूषिता गुरुं ते, अनूषितो गुरुस्तैः; अनुजातास्तां ते, अनुजाता सा तैः; आरूढोऽश्वं सः, आरूढोऽश्वस्तैः; अनुजीर्णास्तां ते, अनुजीर्णा सा तैः, विभक्ताः स्वं ते, विभक्तं स्वं तैः ॥९॥

आरम्भे ।५।१।१०॥

आरम्भार्थाद् धातोर्भूतादौ यः क्तो विहितः स 'कर्त्तरि वा' स्यात् । प्रकृताः कटं ते, प्रकृतः कटस्तैः ॥१०॥

गत्यर्था-ऽकर्मक-पिब-भुजेः ।५।१।११॥

भूतादौ यः क्तो विहितः स एभ्यः 'कर्त्तरि वा' स्यात् । गतोऽसौ ग्रामम्, गतोऽसौ तैः; आसितोऽसौ, आसितं तैः; पीताः पयः, पीतं पयः; भुक्तास्ते, इदं तैर्भुक्तम् ॥११॥

अद्यर्थाच्चाऽऽधारे ।५।१।१२॥

आहारार्थात् धातोर्गत्यर्थादेश्च यः क्तः स 'आधारे वा' स्यात् । इदमेषां जग्धम्, तैर्जग्धम्; इदं तेषां यातम्, तैर्यातम्; इदमेषां शयितम्,

तैः शयितम्; इदं गवां पीतम्, गोभिः पीतम्; इदं तेषां भुक्तम्, तैर्भुक्तम् ॥१२॥

क्त्वा-तुमम् भावे ॥५।१।१३॥

एते धात्वर्थमात्रे स्युः ॥ कृत्वा, कर्तुम्, कारं कारं याति ॥१३॥

भीमादयोऽपादाने ॥५।१।१४॥

एते "अपादाने" स्युः ॥ भीमः, भयानकः ॥१४॥

संप्रदानाच्चान्यत्रोणादयः ॥५।१।१५॥

संप्रदानादपादानाच्चान्यत्रार्थे "उणादयः" स्युः ॥ कारु, कर्षिः ॥ १५ ॥

असरूपोऽपवादे वोत्सर्गः प्राक् क्तेः ॥५।१।१६॥

इतः सूत्रादारभ्य "स्त्रियां क्तिः" [५, ३, ९१] इत्यतः प्राग् योऽपवाद-स्तद्विषयेऽपवादेनासमानरूप "औत्सर्गिकः प्रत्ययो वा" स्यात् ॥ अवश्य-लाव्यम्, अवश्यलवितव्यम् ॥ असरूप इति किम्? ध्यणि यो न स्यात्—कार्यम् ॥ प्राक् क्तेरिति किम्? कृतिः, चिकीर्षा ॥ १६ ॥

ऋवर्ण-व्यञ्जनाद् घ्यण् ॥५।१।१७॥

ऋवर्णान्ताद् व्यञ्जनान्ताच्च धातोः-"घ्यण्" स्यात् ॥ कार्यम्, पाक्यम् ॥१७॥

पाणि-समवाभ्यां सृजः ॥५।१।१८॥

आभ्यां परात् सृजे-"घ्यण्" स्यात् ॥ पाणिसर्ग्या, समवसर्ग्या रज्जुः ॥१८॥

उवर्णादावश्यके ॥५।१।१९॥

अवश्यम्भावे द्योत्ये धातोरुवर्णान्ताद् "घ्यण्" स्यात् ॥ लाव्यम्, अव-श्यपाव्यम् ॥१९॥

आसु-यु-वपि-रपि-लपि-त्रपि-डिपि-दभि-चम्यानमः ॥५।१।२०॥

आङ्पूर्वाभ्यां सुग्-नम्भ्यां यौत्यादेश्च "घ्यण्" स्यात् ॥ आसाव्यम्,

याव्यम्, वाप्यम्, राप्यम्, लाप्यम्, अपत्राप्यम्, डेप्यम्, दाम्यम्, आचाम्यम्, आनाम्यम् ॥२०॥

**वाऽऽधारेऽमावस्या ।५।१।२१॥**

अमापूर्वाद् वसतेराधारे 'घ्यण्' धातो-'र्वा 'ह्रस्वश्च' निपात्यते । अमावस्या, अमावास्या ॥२१॥

**संचाय्य-कुण्डपाय्य-राजसूयं क्रतौ ।५।१।२२॥**

एते क्रतावर्थे 'घ्यणन्ता' निपात्यन्ते । संचाय्यः, कुण्डपाय्यः, राजसूयः क्रतुः ॥२२॥

**प्रणाय्यो निष्कामा-ऽसंमते ।५।१।२३॥**

प्राद् नियो 'घ्यणायादेशौ' स्यातां निष्कामेऽसंमते चार्थे । प्रणाय्यः शिष्यश्चौरो वा ॥२३॥

**धाय्या-पाय्य-सान्नाय्य-निकाय्यमृङ्-मान-हवि-र्निवासे ।५।१।२४॥**

एते ऋगादिषु यथासङ्ख्यं 'घ्यणन्ता' निपात्यन्ते । धाय्या ऋक्, पाय्यं मानम्, सान्नाय्यं हविः, निकाय्यो निवासः ॥२४॥

**परिचाय्योपचाय्या-ऽऽनाय्य-समूह्य-चित्यमग्नौ ।५।१।२५॥**

एतेऽग्नौ निपात्यन्ते । परिचाय्यः, उपचाय्यः, आनाय्यः, समूह्यः, चित्यो वाऽग्निः ॥२५॥

**याज्या दानर्चि ।५।१।२६॥**

यजेः करणे दानर्चि 'घ्यण्' स्यात् । याज्या ॥२६॥

**तव्या-ऽनीयौ ।५।१।२७॥**

एतौ धातोः स्याताम् । कर्त्तव्यः, करणीयः ॥२७॥

**य एचाऽऽतः ।५।१।२८॥**

स्वरान्ताद् धातो-'र्यः' स्यात्, आत 'एच्च'। चेयम्, नेयम्, देयम्, धेयम् ॥

**शकि-तकि-चति-यति-शसि-सहि-यजि-भजि-पवर्गात् ।५।१।२९॥**

एभ्यः पवर्गान्ताच्च 'यः' स्यात्। शक्यम्, तक्यम्, चत्यम्, यत्यम्, शस्यम्, सह्यम्, यज्यम्, भज्यम्, तप्यम्, गम्यम् ॥२९॥

**यमि-मदि-गदोऽनुपसर्गात् ।५।१।३०॥**

एभ्योऽनुपसर्गेभ्यो 'यः' स्यात्। यम्यम्, मद्यम्, गद्यम्। अनुपसर्गादिति किम्? आयाम्यम् ॥३०॥

**चरेराङस्त्वगुरौ ।५।१।३१॥**

अनुपसर्गाच्चरेराङ्पूर्वात् तु अगुरौ 'यः' स्यात्। चर्यः, आचर्यो देशः। अगुराविति किम्? आचार्यः ॥३१॥

**वर्योपसर्या-ऽवद्य-पण्यमुपेयर्तुमती-गर्ह्य-विक्रेये ।५।१।३२॥**

एते उपेयादिषु यथासङ्ख्यं 'यान्ता' निपात्यन्ते। वर्या कन्या, उपसर्या गौः, अवद्यं गर्ह्यम्, पण्या गौः ॥३२॥

**स्वामि-वैश्येऽर्यः ।५।१।३३॥**

अर्त्तेः स्वामि-वैश्ययो-'र्यः' स्यात्। अर्यः स्वामी वैश्यो वा, आर्योऽन्य ॥३३॥

**वह्यं करणे ।५।१।३४॥**

वहेः करणे 'यः' स्यात्। वह्यं शकटम् ॥३४॥

**नाम्नो वदः क्यप् च ।५।१।३५॥**

अनुपसर्गान्नाम्नः पराद् वदेः 'क्यप् यौ' स्याताम्। ब्रह्मोद्यम्, ब्रह्मवद्यम्। नाम्न इति किम्? वाद्यम्। अनुपसर्गादित्येव–प्रवाद्यम् ॥३५॥

**हत्या-भूयं भावे ।५।१।३६॥**

अनुपसर्गान्नाम्नः परौ हत्या-भूयौ भावे 'क्यबन्तौ' साधू स्तः। ब्रह्म-

हत्या, देवभूयं गतः । भाव इति किम्? श्वघात्या सा ॥३६॥

अग्निचित्या ।५।१।३७॥

अग्नेः परात् चेः स्त्रीभावे 'क्यप्' स्यात् । अग्निचित्या ॥३७॥

खेय-मृषोद्ये ।५।१।३८॥

एतौ 'क्यबन्तौ, साधू स्तः । निखेयम्, मृषोद्यम् ॥३८॥

कुप्य-भिद्योद्ध्य-सिध्य-तिष्य-पुष्य-युग्या-ऽऽज्य-सूर्यं नाम्नि ।५।१।३९॥

एते 'क्यबन्ताः' सञ्ज्ञायां निपात्यन्ते । कुप्यं धनम्, भिद्यम्, ऊध्यो नदः, सिध्यः, तिष्यः, पुष्यः, युग्यं वाहनम्, आज्यं घृतम्, सूर्यो रविः ॥३९॥

दृ-वृग्-स्तु-जुषेति-शासः ।५।१।४०॥

एभ्यः 'क्यप्' स्यात् । आदृत्यः, प्रावृत्यः, अवश्यस्तुत्यः, जुष्यः, इत्यः, शिष्यः ॥४०॥

ऋदुपान्त्यादकृपि-चृदृचः ।५।१।४१॥

ऋदुपान्त्याद् धातोः कृपि-चृति-ऋचिवर्जात् 'क्यप्' स्यात् । वृत्यम् । अकृपि चृदृच इति किम्? कल्प्यम्, चर्त्यम्, अर्च्यम् ॥४१॥

कृ-वृषि-मृजि-शंसि-गुहि-दुहि-जपो वा ।५।१।४२॥

एभ्यः 'क्यप् वा' स्यात् । कृत्यम्, कार्यम्; वृष्यम्, वर्ष्यम्; मृज्यम्, मार्ग्यम्; शस्यम्, शंस्यम्; गुह्यम्, गोह्यम्; दुह्यम्, दोह्यम्; जप्यम्, जाप्यम् ॥४२॥

जि-विपूर्-न्यो हलि-मुञ्ज-कल्के ।५।१।४३॥

जेर्विपूर्वाभ्यां च पू-नीभ्यां यथासङ्ख्यं हलि-मुञ्ज-कल्केषु कर्मसु 'क्यप्' स्यात् । जित्यो हलिः, विपूयो मुञ्जः, विनीयः कल्कः । हलि-मुञ्ज-कल्क इति किम्? जेयम्, विपव्यम्, विनेयम् ॥४३॥

पदा-ऽस्वैरि-बाह्या-पक्ष्ये ग्रहः ।५।१।४४॥

एष्वर्थेषु ग्रहेः 'क्यप्' स्यात् । प्रगृह्यं पदम्, गृह्याः परतन्त्राः, ग्रामगृह्या बाह्येत्यर्थः, गुणगृह्या गुणपक्ष्याः ॥४४॥

भृगोऽसंज्ञायाम् ।५।१।४५॥

भृगोऽसंज्ञायां 'क्यप्' स्यात् । भृत्यः पोष्य. । असज्ञायामिति किम्? भार्या=पत्नी ॥४५॥

समो वा ।५।१।४६॥

सपूर्वाद् भृगः 'क्यप् वा' स्यात् । संभृत्यः, संभार्यः ॥४६॥

ते कृत्याः ।५।१।४७॥

घ्यण्-तव्या-ऽनीय-य-क्यप्प्रत्ययाः 'कृत्याः' स्युः ॥४७॥

णक-तृचौ ।५।१।४८॥

धातोरेतौ कर्त्तरि स्याताम् । पाचकः, पक्ता ॥४८॥

अच् ।५।१।४९॥

धातोरच् स्यात् । करः, हरः ॥४९॥

लिहादिभ्यः ।५।१।५०॥

एभ्यो-'ऽच्' स्यात् । लेहः, शेषः ॥५०॥

ब्रुवः ।५।१।५१॥

ब्रूगोऽचि 'ब्रुवः' स्यात् । ब्राह्मणब्रुवः ॥५१॥

नन्द्यादिभ्योऽनः ।५।१।५२॥

एभ्यो नामगणदृष्टेभ्यो-'ऽन.' स्यात् । नन्दनः, वासनः, सहनः, संक्रन्दनः, सर्वदमनः, नर्दनः ॥५२॥

ग्रहादिभ्यो णिन् ।५।१।५३॥

एभ्यो 'णिन्' स्यात् । ग्राही, स्थायी ॥५३॥

**नाम्युपान्त्य-प्री-कृ-गृ-ज्ञः कः ।५।१।५४॥**

नाम्युपान्त्येभ्यो धातुभ्यः, प्र्यादिभ्यश्च 'कः' स्यात् । विक्षिपः प्रियः, किरः, गिरः ज्ञः ॥५४॥

**गेहे ग्रहः ।५।१।५५॥**

गेहेऽर्थे ग्रहेः 'कः' स्यात् । गृहम, गृहाः ॥५५॥

**उपसर्गादातो डोऽश्यः ।५।१।५६॥**

उपसर्गात् परात् श्यैङ्वर्जादाकारान्ताद् धातो-'र्डः' स्यात् । आह्वः । उपसर्गादिति किम् ? दायः । अश्य इति किम् ? अवश्यायः ॥५६॥

**व्याघ्रा-ऽऽघ्रे प्राणि-नसोः ।५।१।५७॥**

एतौ यथासङ्ख्यं प्राणिनि नासिकाया चार्थे घ्रो डे निपात्येते । व्याघ्रः, आघ्रा ॥५७॥

**घ्रा-ध्मा-पा-ट्धे-दृशः शः ।५।१।५८॥**

एभ्यः 'शः' स्यात् । जिघ्रः, उद्धमः, पिबः, उद्धयः, उत्पश्यः ॥५८॥

**साहि-साति-वेद्युदेजि-धारि-पारि-चेतेरनुपसर्गात्**
**।५।१।५९॥**

एभ्योऽनुपसर्गेभ्यो ण्यन्तेभ्यः 'शः' स्यात् । साहयः, सातयः, वेदयः, उदेजयः, धारयः, पारयः, चेतयः । अनुपसर्गादिति किम् ? प्रसाहयिता ॥५९

**लिम्प-विन्दः ।५।१।६०॥**

आभ्यामनुपसर्गाभ्या 'शः' स्यात् । लिम्पः, विन्दः ॥६०॥

**नि-गवादेर्नाम्नि ।५।१।६१॥**

यथासङ्ख्यं निपूर्वाल्लिम्पेर्गवादिपूर्वाच्च विन्देः संज्ञायां 'शः' स्यात् । निलिम्पा देवाः, गोविन्दः, कुविन्दः । नाम्नीति किम् ? निलिपः ॥६१॥

**वा ज्वलादि-दु-नी-भू-ग्रहा-ऽऽस्रोर्णः ।५।१।६२॥**

ज्वलादेर्धातोर्दुनोत्यादेरास्रोश्चानुपसर्गाण् -'णो वा' स्यात्। ज्वलः, ज्वालः; चलः चालः; दवः, दावः; नयः, नायः; भवः, भावः; ग्राहो मकरादिः, ग्रहः सूर्यादिः; आस्रवः, आस्रावः। अनुपसर्गादिति किम्? प्रज्वल. ॥६२॥

अवहृ-सा-संस्रोः ।५।१।६३॥

अवपूर्वाभ्यां हृ-साभ्या सपूर्वाच्च स्रो-'णः' स्यात् । अवहारः, अवसायः संस्रावः ॥६३॥

तन्-व्यधीण्-श्वसातः ।५।१।६४॥

एभ्य आदन्तेभ्यश्च धातुभ्यो 'णः' स्यात् । तानः, व्याधः, प्रत्यायः, श्वासः, अवश्यायः ॥६४॥

नृत्-खन्-रञ्जः शिल्पिन्यकट् ।५।१।६५॥

एभ्यः शिल्पिनि कर्त्तर्यकट् स्यात्। नर्त्तकी, खनकः; रजकः। शिल्पिनीति किम्? नर्त्तिका ॥६५॥

गस्थकः ।५।१।६६॥

गः शिल्पिनि कर्त्तरि 'थकः' स्यात्। गाथकः ॥६६॥

टनण् ।५।१।६७॥

गः शिल्पिनि 'टनण्' स्यात्। गायनी ॥६७॥

हः काल-व्रीह्योः ।५।१।६८॥

हाको हाङो वा काल-व्रीह्योष्टनण् स्यात्। हायनो वर्षम्, हायना व्रीहयः, हावाऽन्यः ॥६८॥

प्रु-सृ-ल्वोऽकः साधौ ।५।१।६९॥

एभ्यः साध्वर्थेभ्यो'-ऽकः' स्यात् । प्रवकः, सरकः, लवकः । साधाविति किम्? प्रावकः ॥६९॥

आशिष्यकन् ।५।१।७०॥

आशिषि गम्यायां धातोरकन् स्यात् । जीवकः । आशिषीति किम् ? जीविका ॥७०॥

तिक्कृतौ नाम्नि ।५।१।७१॥

आशीर्विषये सञ्ज्ञायां गम्यमानाया धातोस्तिक् कृतश्च स्युः । शान्तिः, वीरभूः, वर्द्धमानः ॥७१॥

कर्मणोऽण् ।५।१।७२॥

कर्मणः परात् धातोरण् स्यात् । कुम्भकारः ॥७२॥

शीलि-कामि-भक्ष्याचरीक्षि-क्षमो णः ।५।१।७३॥

कर्मणः परेभ्यः एभ्यो 'णः' स्यात् । धर्मशीला, धर्मकामा, वायुभक्षा, कल्याणाऽऽचारा, सुखप्रतीक्षा, बहुक्षमा ॥७३॥

गायोऽनुपसर्गाट्टक् ।५।१।७४॥

कर्मणः परादनुपसर्गाद् गायतेष्टक् स्यात् । वक्रगी । अनुपसर्गादिति किम् ? खरुसगायः ॥७४॥

सुरा-सीधोः पिबः ।५।१।७५॥

आभ्यां कर्मभ्यां परादनुसर्गात् पिबतेष्टक् स्यात् । सुरापी, सीधुपी ॥७५॥

आतो डोऽह्वा-वा-मः ।५।१।७६॥

कर्मणः परादनुपसर्गाद् ह्वा-वा-मावर्जादादन्ताद् धातो-'र्डः' स्यात् । गोदः । अह्वा-वा-म इति किम् ? स्वर्गह्वायः, तन्तुवायः, धान्यमायः ॥७६॥

समः ख्यः ।५।१।७७॥

कर्मणः परात् संपूर्वात् ख्यो 'डः' स्यात् । गोसङ्ख्यः ॥७७॥

दश्चाऽऽङः ।५।१।७८॥

कर्मणः परादाङ्पूर्वाद् दागः ख्यश्च 'डः' स्यात् । दायादः, स्त्र्याख्यः ॥७८॥

प्राज्ज्ञश्च ।५।१।७९॥

कर्मणः परात् प्रपूर्वाद् ज्ञो दारूपाच्च 'डः' स्यात्। पथिप्रज्ञः, प्रपाप्रदः ॥७९॥

**आशिषि हनः ।५।१।८०॥**

कर्मणः पराद् हन्तेराशिषि 'ड.' स्यात् । शत्रुहः ॥८०॥

**क्लेशाऽऽदिभ्योऽपात् ।५।१।८१॥**

क्लेशादिकर्मणः परादपाद् हन्ते-'ड.' स्यात्। क्लेशापहः, तमोऽपहः ॥८१॥

**कुमार-शीर्षाण्णिन् ।५।१।८२॥**

आभ्या कर्मभ्यां पराद् हन्ते-'णिन्', स्याद्।कुमारघाती, शीर्षघाती ॥८२॥

**अचित्ते टक् ।५।१।८३॥**

कर्मणः पराद् हन्तेरचित्तवति कर्त्तरि 'टक्' स्यात् । वातघ्नं तैलम् । अचित्त इति किम्? पापघातो यति. ॥८३॥

**जाया-पतेश्चिह्नवति ।५।१।८४॥**

आभ्यां कर्मभ्या पराद् हन्तेश्चिह्नवति कर्त्तरि 'टक्' स्यात् । जायाघ्नो ब्राह्मणः, पतिघ्नी कन्या ॥८४॥

**ब्रह्माऽऽदिभ्यः ।५।१।८५॥**

एभ्यः कर्मभ्यः पराद् हन्तेष्टक् स्यात् । ब्रह्मघ्नः, गोघ्नः पापी ॥८५॥

**हस्ति-बाहु-कपाटाच्छक्तौ ।५।१।८६॥**

एभ्यः कर्मभ्यः पराद् हन्तेः शक्तौ गम्यायां 'टक्' स्यात् । हस्तिघ्नः, बाहुघ्नः, कपाटघ्नः । शक्ताविति किम? हस्तिघातो विषदः ॥८६॥

**नगरादगजे ।५।१।८७॥**

नगरात् कर्मण. पराद् हन्तेरगजे कर्त्तरि 'टक्' स्यात् । नगरघ्नो व्याघ्रः। अगज इति किम्? नगरघातो हस्ती ॥८७॥

**राजघः ।५।१।८८॥**

राज्ञः कर्मणः पराद् हन्ते-'टक् घाऽऽदेशश्च' निपात्यते। राजघः ॥८८॥

पाणिघ-ताडघौ शिल्पिनि ।५।१।८९।।

एतौ शिल्पिनि 'टगन्तौ' निपात्येते । पाणिघः, ताडघः । शिल्पिनीति किम् ? पाणिघातः, ताडघातः ॥८९॥

कुक्ष्यात्मोदराद् भृगः खिः ।५।१।९०।।

एभ्यः कर्मभ्यः पराद् भृगः 'खिः' स्यात् । कुक्षिम्भरिः, आत्मम्भरिः, उदरम्भरिः ॥९०॥

अर्होऽच् ।५।१।९१।।

कर्मणः परादर्हेरच् स्यात् । पूजाऽर्हा साध्वी ॥९१॥

धनुर्-दण्ड-त्सरु-लाङ्गला-ऽङ्कुशर्ष्टि-यष्टि-शक्ति-तोमर-घटाद् ग्रहः ।५।१।९२।।

एभ्यः कर्मभ्यः पराद् ग्रहो'ऽच्' स्यात् । धनुर्ग्रहः, दण्डग्रहः, त्सरुग्रहः, लाङ्गलग्रहः, अङ्कुशग्रहः, ऋष्टिग्रहः, यष्टिग्रहः, शक्तिग्रहः, तोमरग्रहः, घटग्रहः ॥९२॥

सूत्राद् धारणे ।५।१।९३।।

सूत्रात् कर्मणः पराद् ग्रहो ग्रहणपूर्वकधारणार्थादच् स्यात् । सूत्रग्रहः प्राज्ञः, सूत्रधारो वा । धारण इति किम् ? सूत्रग्राहः ॥९३॥

आयुधाऽऽदिभ्यो धृगोऽदण्डादेः ।५।१।९४।।

दण्डादिवर्जादायुधादेः कर्मणः पराद् धृगो-'ऽच्' स्यात् । धनुर्धरः, भूधरः । अदण्डादेरिति किम् ? दण्डधारः, कुण्डधारः ॥९४॥

हृगो वयोऽनुद्यमे ।५।१।९५।।

कर्मणः पराद् हृगो वयस्यनुद्यमे च गम्ये-'ऽच्' स्यात् । अस्थिहरः श्वशिशुः; उद्यमः- उत्क्षेपणमाकाशे धारणं वा, तदभावे- अंशहरो दायादः, मनोहरा माला । वयोऽनुद्यम इति किम् ? भारहारः ॥९५॥

## आङः शीले ।५।१।९६॥

कर्मणः पराद् आङ्पूर्वाद् हृगेः शीले गम्ये'-ऽच्' स्यात् । पुष्पाहरः । शील इति किम् ? पुष्पाहारः ॥९६॥

## दृति-नाथात् पशाविः ।५।१।९७॥

आभ्यां कर्मभ्यां परात् हृगः पशौ कर्त्तरि 'इः' स्यात् । दृतिहरिः श्वा, नाथहरिः सिंहः ॥९७॥

## रजः-फले-मलाद् ग्रहः ।५।१।९८॥

एभ्यः कर्मभ्यः पराद् ग्रहेरिः स्यात् । रजोग्रहिः, फलेग्रहिः, मलग्रहिः ॥९८॥

## देव-वातादापः ।५।१।९९॥

आभ्यां कर्मभ्यां पराद् आपेरिः स्यात् । देवापिः, वातापि. ॥९९॥

## शकृत्-स्तम्बाद् वत्स-व्रीहौ कृगः ।५।१।१००॥

आभ्यां कर्मभ्यां परात् कृगो यथासङ्ख्य वत्स-व्रीह्योः कर्त्रोरिः स्यात् । शकृत्करिर्वत्सः, स्तम्बकरिर्व्रीहिः ॥१००॥

## किम्-यत्-तद्-बहोरः ।५।१।१०१॥

एभ्यः कर्मभ्यः परात् कृगः 'अ.' स्यात् । किंकरा, यत्करा, बहुकरा ॥१०१॥

## सङ्ख्या-ऽह-र्दिवा-विभा-निशा-प्रभा-भाश्चित्र-कर्त्राद्यन्ता-ऽनन्त-कार-बाहरु-र्धनु-र्नान्दी-लिपि-लिवि-बलि-भक्ति-क्षेत्र-जङ्घा-क्षपा-क्षणदा-रजनि-दोषा-दिन-दिवसाट्टः ।५।१।१०२॥

सङ्ख्येत्यर्थप्रधानमपि, एभ्यः कर्मभ्यः परात् कृगष्टः स्यात् । सङ्ख्याकरः, द्विकरः; अहस्कर., दिवाकरः, विभाकरः, निशाकरः, प्रभाकरः, भास्करः, चित्रकरः, कर्तृकरः, आदिकरः अन्तकरः, अनन्तकरः, कारकरः, बाहु-

करः, अरुष्करः, धनुष्करः, नान्दीकरः, लिपिकरः लिविकरः, बलिकरः, भक्तिकरः, क्षेत्रकरः, जङ्घाकरः, अपाकरः, क्षणदाकरः, रजनिकरः, दोषाकरः, दिनकरः, दिवसकरः ॥१०२॥

**हेतु-तच्छीलाऽनुकूलेऽशब्द-श्लोक-कलह-गाथा-वैर-चाटु-सूत्र मन्त्र पदात् ।५।१।१०३॥**

एषु कर्तृषु शब्दादिवर्जात् कर्मणः परात् कृगष्टः स्यात् । यशस्करी विद्या, श्राद्धकरः, प्रेषणकरः । शब्दादिनिषेधः किम्? शब्दकार इत्यादि ॥१०३॥

**भृतौ कर्मणः ।५।१।१०४॥**

कर्मशब्दात् कर्मणः परात् कृगो भृतौ गम्यायां 'टः' स्यात् । कर्मकरी दासी ॥१०४॥

**क्षेम-प्रिय-मद्र-भद्रात् खाऽण् ।५।१।१०५॥**

एभ्यः कर्मभ्यः परात् कृगः 'खाऽणौ' स्याताम् । क्षेमङ्करः, क्षेमकारः; प्रियङ्करः, प्रियकारः; मद्रङ्करः, मद्रकार; भद्रङ्करः, भद्रकारः ॥१०५॥

**मेघर्त्ति-भया-ऽभयात् खः ।५।१।१०६॥**

एभ्यः कर्मभ्यः परात् कृगः 'खः' स्यात् । मेघङ्करः, ऋतिङ्करः, भयङ्करः, अभयङ्करः ॥१०६॥

**प्रिय वशाद् वदः ।५।१।१०७॥**

आभ्यां कर्मभ्यां पराद् वदः 'खः' स्यात्। प्रियम्वदः, वशम्वदः॥१०७॥

**द्विषन्तप-परन्तपौ ।५।१।१०८॥**

द्विषत्पराभ्यां कर्मभ्यां पराण्ण्यन्तात् तपेः खो ह्रस्वो द्विषतोऽच्च निपात्यते। द्विषन्तपः, परन्तपः ॥१०८॥

**परिमाणार्थ-मित-नखात् पचः ।५।१।१०९॥**

प्रस्थादि-मित-नखेभ्यः कर्मभ्यः परात् पचेः 'खः' स्यात् । प्रस्थम्पचः, मितम्पचः, नखम्पचः ॥१०९॥

कूलाऽभ्र-करीषात् कषः ।५।१।११०॥

एभ्यः कर्मभ्यः कषेः 'खः' स्यात् । कूलङ्कषा, अभ्रङ्कषा, करीषङ्कषा ॥११०॥

सर्वात् सहश्च ।५।१।१११॥

सर्वात् कर्मणः परात् सहेः कषेश्च 'खः' स्यात् । सर्वंसहः, सर्वङ्कषः ॥१११॥

भृ-वृ-जि-तृ-तप-दमेश्च नाम्नि ।५।१।११२॥

कर्मणः परेभ्य एभ्यः सहेश्च संज्ञाया 'खः' स्यात् । विश्वम्भरा भूः, पतिम्वरा कन्या, शत्रुञ्जयोऽद्रिः, रथन्तरं साम, शत्रुन्तपो राजा, बलिन्दमः कृष्णः, शत्रुसहो राजा । नाम्नीति किम् ? कुटुम्बभारः ॥११२॥

धारेर्धर्च ।५।१।११३॥

कर्मणः पराद् धारेः संज्ञाया 'खः' स्यात्, धारेश्च 'धर्' । वसुन्धरा भूः ॥११३॥

पुरन्दर-भगन्दरौ ।५।१।११४॥

एतौ संज्ञाया खान्तौ निपात्येते । पुरन्दरः शक्रः, भगन्दरो व्याधिः ॥११४॥

वाचंयमो व्रते ।५।१।११५॥

व्रते गम्यमाने वाचः कर्मणः पराद् यमेः 'खो' वाचो 'ऽमन्तश्च' स्यात् । वाचंयमो व्रती ॥११५॥

मन्याण्णिन् ।५।१।११६॥

कर्मणः पराद् मन्यतेः 'णिन्' स्यात् । पण्डितमानी बन्धोः ॥११६॥

कर्तुः खश् ।५।१।११७॥

प्रत्ययार्थात् कर्तुः कर्मणः पराद् मन्यतेः 'खश्' स्यात् । पण्डितम्मन्यः । कर्तुरिति किम् ? पट्टमानी चैत्रस्य ॥११७॥

**एजेः ।५।१।११८॥**

कर्मणः परादेजयतेः 'खश्' स्यात् । अरिमेजयः ॥११८॥

**शुनी-स्तन-मुञ्ज-कूला-ऽऽस्य-पुष्पाट्ट्धेः ।५।१।११९॥**

एभ्यः कर्मभ्यः ट्धेः 'खश्' स्यात् । शुनिन्धयः, स्तनन्धयः, मुञ्जन्धयः, कूलन्धयः' आस्यन्धयः, पुष्पन्धयः ॥११९॥

**नाडी-घटी-खरी-मुष्टि-नासिका-वाताद् ध्मश्च ।५।१।१२०॥**

एभ्यः कर्मभ्यः पराद् ध्मः, ट्धेश्च 'खश्' स्यात् । नाडिन्धमः, नाडिन्धयः; घटिन्धमः, घटिन्धयः; खरिन्धमः, खरिन्धयः; मुष्टिन्धमः, मुष्टिन्धयः; नासिकन्धमः, नासिकन्धयः; वातन्धमः, वातन्धयः ॥१२०॥

**पाणि-करात् ।५।१।१२१॥**

आभ्यां कर्मभ्यां पराद् ध्मः 'खश्' स्यात् । पाणिन्धमः, करन्धमः ॥

**कूलादुद्रुजोद्वहः ।५।१।१२२॥**

कूलात् कर्मणः पराभ्यामाभ्या 'खश्' स्यात् । कूलमुद्रुजः, कूलमुद्वहः ॥

**वहा-ऽभ्राल्लिहः ।५।१।१२३॥**

आभ्या कर्मभ्यां परालिहः 'खश्' स्यात् । वहंलिहः, अभ्रंलिहः ॥१२३॥

**बहु-विध्वरुस्तिलात् तुदः ।५।१।१२४॥**

एभ्यः कर्मभ्यः परात् तुदेः 'खश्' स्यात् । बहुन्तुदः, विधुन्तुदः, अरुन्तुदः, तिलन्तुदः ॥१२४॥

**ललाट-वात-शर्द्धात् तपा-ऽज-हाकः ।५।१।१२५॥**

एभ्यः कर्मभ्यः परेभ्यो यथासङ्ख्यं तपा ऽज-हाग्भ्यः 'खश्' स्यात् । ललाटन्तपः, वातमजः, शर्द्धञ्जहः ॥१२५॥

**असूर्योग्राद् दृशः ।५।१।१२६॥**

आभ्यां कर्मभ्यां पराद् दृशेः 'खश्' स्यात् । असूर्यम्पश्यः, उग्रम्पश्यः ॥

इरम्मदः ।५।१।१२७॥

इरापूर्वाद् मदेः 'खश्' स्यात् । इरम्मदः ॥१२७॥

नग्न-पलित-प्रिया-ऽन्ध-स्थूल-सुभगा-ऽऽढ्य-तदन्ताऽच्व्य-र्थेऽच्वेर्भुवः खिष्णु-खुकञौ ।५।१।१२८॥

नग्नादिभ्यः केवलेभ्यस्तदन्तेभ्यश्चाच्व्यन्तेभ्यश्च्व्यर्थवृत्तिभ्यः पराद् भुवः 'खिष्णु-खुकञौ' स्याताम् । नग्नम्भविष्णुः, नग्नम्भावुकः; पलितम्भविष्णुः, पलितम्भावुकः; प्रियम्भविष्णुः, प्रियम्भावुकः; अन्धम्भविष्णुः, अन्धम्भावुकः; स्थूलम्भविष्णुः, स्थूलम्भावुकः; सुभगम्भविष्णुः, सुभगम्भावुकः; आढ्यम्भविष्णुः, आढ्यम्भावुकः; तदन्त.,– सुनग्नम्भविष्णुः, सुनग्नम्भावुक इत्यादि । अच्वेरिति किम्? आढ्यो भविता ॥१२८॥

कृगः खनट् करणे ।५।१।१२९॥

नग्नादिभ्योऽच्व्यन्तेभ्यश्च्व्यर्थवृत्तिभ्यः परात् कृगः करणे 'खनट्' स्यात् । नग्नङ्करणं द्यूतम्, पलितङ्करणम्, प्रियङ्करणम्, अन्धङ्करणम्, स्थूलङ्करणम्, सुभगङ्करणम्, आढ्यङ्करणम्, सुनग्नङ्करणम् । च्व्यर्थ इति किम्? नग्नं करोति द्यूतेन ॥१२९॥

भावे चा-ऽऽशिताद् भुवः खः ।५।१।१३०॥

आशितात् पराद् भुवो भाव-करणयोः 'ख.' स्यात् । आशितम्भवस्ते, आशितम्भव ओदनः ॥१३०॥

नाम्नो गमः खड्-डौ च, विहायसस्तु विहः ।५।१।१३१॥

नाम्नः पराद् गमेः 'खड्-ड-खाः' स्युः, 'विहायसो विहश्च' । तुरङ्गः, तुरगः; विहङ्गः, विहगः; तुरङ्गमः; विहङ्गमः, सुतङ्गमो मुनिः ॥१३१॥

सुग-दुर्गमाधारे ।५।१।१३२॥

सु-दुर्भ्यां पराद् गमेराधारे 'डः' स्यात् । सुगः, दुर्गः पन्थाः ॥१३२॥

**निर्गो देशे ।५।१।१३३॥**

निस्पूर्वाद् गमेराधारे देशे 'डः' स्यात् । निर्गो देशः ॥१३३॥

**शमो नाम्न्यः ।५।१।१३४॥**

शमो नाम्नः पराद् धातोः संज्ञायाम् 'अः' स्यात् । शम्भवोऽर्हन् । नाम्नीति किम् ? शङ्करी दीक्षा ॥१३४॥

**पार्श्वाऽऽदिभ्यः शीङः ।५।१।१३५॥**

एभ्यो नामभ्यः परात् शीङः 'अः' स्यात् । पार्श्वशयः ॥१३५॥

**ऊर्ध्वादिभ्यः कर्तुः ।५।१।१३६॥**

एभ्यः कर्तृवाचिभ्यः परात् शीङः 'अः' स्यात् । ऊर्ध्वशयः, उत्तानशयः ॥१३६॥

**आधारात् ।५।१।१३७॥**

आधारान्नाम्नः परात् शीङः 'अः' स्यात् । खशयः ॥१३७॥

**चरेष्टः ।५।१।१३८॥**

आधारात् परात् चरेष्टः स्यात् । कुरुचरी ॥१३८॥

**भिक्षा-सेना-ऽऽदायात् ।५।१।१३९॥**

एभ्यः परात् चरेष्टः स्यात् । भिक्षाचरी, सेनाचरः, आदायचरः ॥१३९॥

**पुरो-ऽग्रतोऽग्रे सर्त्तेः ।५।१।१४०॥**

एभ्यः परात् सर्त्तेष्टः स्यात् । पुरःसरी, अग्रतःसरः, अग्रेसरः ॥१४०॥

**पूर्वात् कर्तुः ।५।१।१४१॥**

पूर्वात् कर्तृवृत्तेः परात् सर्त्तेष्टः स्यात् । पूर्वसरः । कर्तुरिति किम् ? पूर्वसारः ॥१४१॥

**स्था-पा-स्ना-त्रः कः ।५।१।१४२॥**

नाम्नः परेभ्य एभ्यः 'कः' स्यात् । समस्थः, कच्छप, नदीष्णः, धर्मज्ञम् ॥१४२॥

**शोकापनुद-तुन्दपरिमृज-स्तम्बेरम-कर्णेजपं प्रियाऽलस-हस्ति-सूचके ।५।१।१४३॥**

एते यथासङ्ख्य प्रियादिष्वर्थेषु 'कान्ता' निपात्यन्ते । शोकापनुदः प्रियः, तुन्दपरिमृजोऽलसः, स्तम्बेरमो हस्ती, कर्णेजपोऽतिखलः । एष्विति किम् ? शोकापनोदो धर्माचार्यः ॥१४३॥

**मूलविभुजादयः ।५।१।१४४॥**

एते 'कान्ता' यथादर्शनं निपात्यन्ते । मूलविभुजो रथः, कुमुदं कैरवम् ॥

**दुहेर्डुघः ।५।१।१४५॥**

नाम्नः परात् दुहे डुघ ' स्यात् । कामदुघा ॥१४५॥

**भजो विण् ।५।१।१४६॥**

नाम्नः पराद् भजे-'विण्' स्यात् । अर्धभाक् ॥१४६॥

**मन् वन्-क्वनिप्-विच् क्वचित् ।५।१।१४७॥**

नाम्नः पराद् धातोरेते यथालक्ष्य स्युः । मन्– इन्द्रशर्मा । वन्– विजावा । क्वनिप्– सुधीवा । विच्– शुभंयाः ॥१४७॥

**क्विप् ।५।१।१४८॥**

नाम्नः पराद् धातोर्यथालक्ष्यं 'क्विप्' स्यात् । उखास्रत् ॥१४८॥

**स्पृशोऽनुदकात् ।५।१।१४९॥**

उदकवर्जाद् नाम्नः परात् स्पृशे 'क्विप्' स्यात् । घृतस्पृक् । अनुदकादिति किम् ? उदकस्पर्शः ॥१४९॥

**अदोऽनन्नात् ।५।१।१५०॥**

अन्नवर्जाद् नाम्नः पराददेः 'क्विप्' स्यात् । आमात् । अनन्नादिति किम् ? अन्नादः ॥१५०॥

**क्रव्यात्-क्रव्यादावाम-पक्वादौ ।५।१।१५१॥**

एतौ यथासङ्ख्यमामात्-पक्वादर्थौ 'क्विब्-णन्तौ' साधू स्तः। क्रव्यात्–आममांसभक्षः, क्रव्यादः– पक्वमांसभक्षः ॥१५१॥

**त्यदाद्यन्य-समानादुपमानाद् व्याप्ये दृशः टक्-सकौ च ।५।१।१५२॥**

एभ्य उपमानेभ्यो व्याप्येभ्यः पराद् दृशेर्व्याप्य एव 'टक्-सकौ क्विप् च' स्युः । त्यादृशः, त्यादृक्षः, त्यादृक्; अन्यादृशः, अन्यादृक्षः, अन्यादृक्; सदृशः, सदृक्षः, सदृक् । व्याप्य इति किम् ? तेनेव दृश्यते ॥१५२॥

**कर्तुर्णिन् ।५।१।१५३॥**

कर्त्रर्थादुपमानात् पराद् धातो-'र्णिन्' स्यात् । उष्ट्रक्रोशी ॥१५३॥

**अजातेः शीले ।५।१।१५४॥**

अजात्यर्थाद् नाम्नः पराच्छीलार्थाद् धातो-'र्णिन्' स्यात् । उष्णभोजी, प्रस्थायी । अजातेरिति किम् ? शालीन् भोक्ता । शील इति किम् ? उष्णभोजो मन्दः ॥१५४॥

**साधौ ।५।१।१५५॥**

नाम्नः परात् साध्वर्थाद् धातो-'र्णिन्' स्यात् । साधुकारी ॥१५५॥

**ब्रह्मणो वदः ।५।१।१५६॥**

ब्रह्मणः पराद् वदे-र्णिन्' स्यात् । ब्रह्मवादी ॥१५६॥

**व्रता-ऽऽभीक्ष्ण्ये ।५।१।१५७॥**

अनयोर्गम्यमानयोर्नाम्नः पराद् धातो-र्णिन्' स्यात् । स्थण्डिलवर्त्ती, क्षीरपायिण उशीनराः ॥१५७॥

**करणाद् यजो भूते ।५।१।१५८॥**

करणार्थाद् नाम्नः पराद् भूतार्थाद् यजे-'णिन्' स्यात् । अग्निष्टोमयाजी ॥१५८॥

**निन्द्ये व्याप्याादिन् विक्रियः ।५।१।१५९॥**

व्याप्याद् नाम्नः परात् भूतार्थाद् विक्रिय. कुत्स्ये कर्त्तरि 'इन्' स्यात् । सोमविक्रयी । निन्द्य इति किम् ? धान्यविक्रायः ॥१५९॥

**हनो णिन् ।५।१।१६०॥**

व्याप्यात् पराद् भूतार्थाद् हन्तेर्निन्द्ये कर्त्तरि 'णिन्' स्यात् । पितृघाती ॥१६०॥

**ब्रह्म-भ्रूण-वृत्रात् क्विप् ।५।१।१६१॥**

एभ्य कर्मभ्यः पराद् भूतार्थाद् हन्ते. 'क्विप्' स्यात् । ब्रह्महा, भ्रूणहा, वृत्रहा ॥१६१॥

**कृगः सु-पुण्य-पाप-कर्म-मन्त्र-पदात् ।५।१।१६२॥**

सोः पुण्यादेश्च कर्मणः परात् भूतार्थात् कृगः 'क्विप्' स्यात् । सुकृत्, पुण्यकृत्, पापकृत्, कर्मकृत्, मन्त्रकृत, पदकृत् ॥१६२॥

**सोमात् सुगः ।५।१।१६३॥**

सोमाद् व्याप्यात् पराद् भूतार्थात् सुगः 'क्विप्' स्यात् । सोमसुत् ॥१६३॥

**अग्नेश्चेः ।५।१।१६४॥**

अग्नेर्व्याप्यात् पराद् भूतार्थाच्चेः 'क्विप्' स्यात् । अग्निचित ॥१६४॥

**कर्मण्यग्न्यर्थे ।५।१।१६५॥**

कर्मणः पराद् भूतार्थाच्चेः कर्मण्यग्न्यर्थे 'क्विप्' स्यात् । श्येनचित् ॥

**दृशः क्वनिप् ।५।१।१६६॥**

व्याप्यात् पराद् भूतार्थाद् दृशे. 'क्वनिप्' स्यात् । बहुदृश्वा ॥१६६॥

सह-राजभ्यां कृग्-युधेः ।५।१।१६७॥

आभ्यां कर्मभ्यां परात् भूतार्थात् कृगो युधेश्च 'क्वनिप्' स्यात् । सहकृत्वा, सहयुध्वा, राजकृत्वा, राजयुध्वा ॥१६७॥

अनोर्जनेर्डः ।५।१।१६८॥

कर्मणः परादनुपूर्वात् भूतार्थाद् जने-'डः' स्यात् । पुमनुजः ॥१६८॥

सप्तम्याः ।५।१।१६९॥

सप्तम्यन्ताद् भूतार्थाज्जने-'डः' स्यात् । मन्दुरजः ॥१६९॥

अजातेः पञ्चम्याः ।५।१।१७०॥

पञ्चम्यन्तादजात्यर्थाद् भूतार्थाद् जने-'डः' स्यात् । बुद्धिजः । अजातेरिति किम् ? गजात् जातः ॥१७०॥

क्वचित् ।५।१।१७१॥

उक्तादन्यत्रापि यथालक्ष्यं 'डः' स्यात् । किञ्जः, अनुजः, अजः, स्त्रीजः, ब्रह्मज्यः, वराहः, आखः ॥१७१॥

सु-यजोर्ङ्वनिप् ।५।१।१७२॥

आभ्यां भूतार्थाभ्यां 'ङ्वनिप्' स्यात् । सुत्वानौ, यज्वा ॥१७२॥

जॄषोऽन्तृः ।५।१।१७३॥

जॄषेर्भूतार्थाद् 'अतृ' स्यात् । जरती ॥१७३॥

क्त-क्तवतू ।५।१।१७४॥

भूतार्थाद् धातोरेतौ स्याताम् । कृतः, कृतवान् ॥१७४॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां सिद्धहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासनलघुवृत्तौ पञ्चमस्याध्यायस्य प्रथमः पादः समाप्तः ॥५।१॥

अगणितपक्षेपु बलः पुरुषोत्तमचित्तविस्मयं जनयन् ।
रामोल्लासनमूर्तिः श्रीकर्णः कर्ण इव जयति ॥१७॥

## [ द्वितीयः पादः ]

### श्रु-सद-वस्भ्यः परोक्षा वा ।५।२।१॥

एभ्यो भूतार्थेभ्यः 'परोक्षा वा' स्यात् । उपशुश्राव, उपससाद, अनूवास, पक्षे,- उपाश्रौषीत्, उपाशृणोत्; उपासदत्, उपासीदत्; अन्वात्सीत्, अन्ववसत् ॥१॥

### तत्र क्वसु-कानौ तद्वत् ।५।२।२॥

परोक्षामात्रविषये धातोः परौ 'क्वसु-कानौ' स्याताम्, तौ च 'परोक्षेव'। शुश्रुवान्, सेदिवान्, ऊषिवान्, पेचिवान्, पेचानः ॥२॥

### वेयिवदनाश्वदनूचानम् ।५।२।३॥

एते 'भूतेऽर्थे क्वसुकानान्ताः कर्त्तरि वा' निपात्यन्ते । समीयिवान्, अनाश्वान्, अनूचानः, पक्षे- अगात्, उपैत्, उपेयाय, नाशीत्, नाश्नात्, नाश, अनववोचत्, अन्ववक्, अन्वब्रवीत्, अनूवाच ॥३॥

### अद्यतनी ।५।२।४॥

भूतार्थाद्धातो-'रद्यतनी' स्यात् । अकार्षीत् ॥४॥

### विशेषाऽविवक्षा व्यामिश्रे ।५।२।५॥

अनद्यतनादिविशेषाऽविवक्षायां व्यामिश्रणे च सति भूतार्थाद् धातो-'रद्यतनी' स्यात्। रामो वनमगमत्, अद्य ह्यो वाऽभुक्ष्महि ॥५॥

### रात्रौ वसोऽन्त्ययामाऽस्वप्तर्यद्य ।५।२।६॥

रात्रौ भूतार्थवृत्तेर्वसते-'रद्यतनी' स्यात्, स चेदर्थो यस्यां रात्रौ भूतस्तस्या एवान्त्ययामं व्याप्याऽस्वप्तरि कर्त्तरि स्यात्, अद्यतनेनैवान्त्ययामेनाविच्छिन्ने अद्यतने चेत् प्रयोगोऽस्ति नाद्यतनान्तरे । अमुत्रावात्सम् । रात्र्यन्त्ययामे तु मुहूर्त्तमपि स्वापेऽमुत्रावसमिति ॥६॥

अनद्यतने ह्यस्तनी ।५।२।७॥

आ न्याय्याद् उत्थानादा न्याय्याञ्च संवेशनाद्, अहरुभयतः सार्द्धरात्रं वाऽद्यतनः, तस्मिन्नसति भूतार्थाद् धातो-'ह्यस्तनी' स्यात् । अकरोत् ॥७॥

ख्याते दृश्ये ।५।२।८॥

लोकविज्ञाते प्रयोक्तुः शक्यदर्शने भूतानद्यतनेऽर्थे वर्त्तमानाद् धातो-'र्ह्यस्तनी' स्यात् । अरुणत् सिद्धराजोऽवन्तीम् । ख्यात इति किम्? चकार कटम् । दृश्य इति किम्? जघान कंसं किल वासुदेवः ॥८॥

अयदि स्मृत्यर्थे भविष्यन्ती ।५।२।९॥

स्मृत्यर्थे धातावुपपदे भूतानद्यतनार्थवृत्तेर्धातो-'र्भविष्यन्ती' स्यात्, अयद्-योगे । स्मरसि साधो! स्वर्गे स्थास्यामः? । अयदीति किम्? अभिजानासि मित्र! यत् कलिङ्गेष्ववसाम? ॥९॥

वाऽऽकाङ्क्षायाम् ।५।२।१०॥

स्मृत्यर्थे धातावुपपदे प्रयोक्तुः क्रियान्तराकाङ्क्षायां सत्यां भूतानद्यतनार्थाद् धातो-'र्भविष्यन्ती वा' स्यात् । स्मरसि मित्र! कश्मीरेषु वत्स्यामोऽवसाम वा, तत्रौदनं भोक्ष्यामहे, अभुञ्ज्महि वा? ॥१०॥

कृताऽस्मरणा-ऽतिनिह्नवे परोक्षा ।५।२।११॥

कृतस्यापि चित्तविक्षेपादिनाऽस्मरणेऽत्यन्तनिह्नवे वा गम्ये भूतानद्यतनार्थाद् धातोः 'परोक्षा' स्यात् । सुप्तोऽहं किल विललाप, कलिङ्गेषु ब्राह्मणो हतस्त्वया, नाऽहं कलिङ्गान् जगाम ॥११॥

परोक्षे ।५।२।१२॥

भूतानद्यतने परोक्षार्थाद् धातोः 'परोक्षा' स्यात् । धर्म्मं दिदेश तीर्थङ्करः ॥

ह-शश्वद्-युगान्तःप्रच्छ्ये ह्यस्तनी च ।५।२।१३॥

हे शश्वति च प्रयुक्ते पञ्चवर्षमध्यप्रच्छ्ये च भूतानद्यतने परोक्षेऽर्थे वर्त्त॰

मानाद् धातो'र्ह्यस्तनी-परोक्षे' स्याताम्। इति हाकरोत्, इति ह चकार, शश्वदकरोत्, शश्वच्चकार, किमगच्छस्त्वं मथुराम्? किं जगन्थ त्वं मथुराम्? ॥१३॥

अविवक्षिते ।५।२।१४॥

भूतानद्यतने परोक्षे परोक्षत्वेनाविवक्षितेऽर्थे वर्त्तमानाद् धातो'र्ह्यस्तनी' स्यात्। अहन् कंसं किल वासुदेवः ॥१४॥

वाऽद्यतनी पुराऽऽदौ ।५।२।१५॥

भूतानद्यतने परोक्षे परोक्षत्वेनाविवक्षितेऽर्थे वर्त्तमानाद् धातोः पुरादावुपपदे 'अद्यतनी वा' स्यात्। अवात्सुरिह पुरा छात्राः, पक्षे– अत्रसन्, ऊषुर्वा; तदाऽभाषिष्ट राघवः, पक्षे- अभाषत, बभाषे ॥१५॥

स्मे च वर्त्तमाना ।५।२।१६॥

भूतानद्यतनेऽर्थे वर्त्तमानाद् धातो स्मे पुराऽऽदौ चोपपदे 'वर्त्तमाना' स्यात्। पृच्छति स्म पुरोधसम्, वसन्तीह पुरा छात्राः, अथाऽऽह वर्णी ॥

ननौ पृष्टोक्तौ सद्वत् ।५।२।१७॥

नन्वावुपपदे पृष्टप्रतिवचने भूतेऽर्थे वर्त्तमानाद् धातो'-र्वर्त्तमानेव वर्त्तमाना' स्यात्। किमकार्षीः कटं चैत्र! ननु करोमि भोः, ननु कुर्वन्तं मां पश्य ॥

नन्वोर्वा ।५।२।१८॥

नन्वोरुपपदयोः पृष्टोक्तौ भूतेऽर्थे वर्त्तमानाद् धातो-'र्वा वर्त्तमाना' स्यात्, सा च 'सद्वत्'। किमकार्षीः कटं चैत्र? न करोमि भोः, न कुर्वन्त मां पश्य, नाकार्षम्; नु करोमि भोः! नु कुर्वाणं मा पश्य, न्वकार्षम् ॥१८॥

सति ।५।२।१९॥

वर्त्तमानार्थाद् धातो'-र्वर्त्तमाना' स्यात्। अस्ति कूरं पचति, मांसं न भक्षयति, इहाधीमहे, तिष्ठन्ति पर्वताः ॥१९॥

### शत्रानशावेष्यति तु सस्यौ ।५।२।२०॥

सदर्थाद् धातोः 'शत्रानशौ' स्याताम्, भविष्यन्तीविषयेऽर्थे 'स्ययुक्तौ'। यान्, शयानः, यास्यन्, शयिष्यमाणः ॥२०॥

### तौ माङ्याक्रोशेषु ।५।२।२१॥

माङ्युपपदे आक्रोशे गम्ये 'तौ शत्रानशावेव' स्याताम्। मा पचन् वृषलो ज्ञास्यति, मा पचमानोऽसौ मर्तुकामः ॥२१॥

### वा वेत्तेः क्वसुः ।५।२।२२॥

सदर्थाद् वेत्तेः 'क्वसुर्वा' स्यात्। तत्त्वं विद्वान्, विदन् ॥२२॥

### पूङ्-यजः शानः ।५।२।२३॥

आभ्यां सदर्थाभ्यां परः 'शानः' स्यात्। पवमानः, यजमानः ॥२३॥

### वयः शक्ति-शीले ।५।२।२४॥

एषु गम्येषु सदर्थाद् धातोः 'शानः' स्यात्। लियं गच्छमानाः, समश्नानाः, परान् निन्दमानाः ॥२४॥

### धारीङोऽकृच्छ्रेऽतृश् ।५।२।२५॥

सुखसाध्ये सत्यर्थे वर्त्तमानाद् धारेरिङश्च परो'-ऽतृश्' स्यात्। धारयन्नाचाराङ्गम्, अधीयन् द्रुमपुष्पीयम् ॥२५॥

### सुग् द्विषार्हः सत्रि-शत्रु-स्तुत्ये ।५।२।२६॥

सदर्थेभ्य एभ्यो यथासङ्ख्यं सत्रिणि शत्रौ स्तुत्ये च कर्त्तरि 'अतृश्' स्यात्। सर्वे सुन्वन्तः, चौरं द्विषन्, पूजामर्हन्। एष्विति किम्? सुरां सुनोति ॥२६॥

### तृन् शील-धर्म-साधुषु ।५।२।२७॥

शीलादिषु सदर्थाद् धातो'स्तृन्', स्यात्। कर्ता कटम्, वधूमूढां मुण्डयितारः श्राविष्ठायनाः, गन्ता खेलः ॥२७॥

**भ्राज्यलङ्कृग्-निराकृग्-भू-सहि-रुचि-वृति-वृधि-चरि-प्रजना-ऽपत्रप इष्णुः ।५।२।२८॥**

एभ्यः शीलादिसदर्थेभ्य 'इष्णुः' स्यात् । भ्राजिष्णुः, अलङ्करिष्णुः, निराकरिष्णुः, भविष्णुः, सहिष्णुः, रोचिष्णुः, वर्त्तिष्णुः, वर्द्धिष्णुः, चरिष्णुः, प्रजनिष्णुः, अपत्रपिष्णुः ॥२८॥

**उदः पचि-पति-पदि-मदेः ।५।२।२९॥**

उत्पूर्वेभ्य एभ्यः शीलादिसदर्थेभ्य 'इष्णुः' स्यात् । उत्पचिष्णुः, उत्पतिष्णुः, उत्पदिष्णुः, उन्मदिष्णुः ॥२९॥

**भू-जेः ष्णुक् ।५।२।३०॥**

आभ्यां शीलादिसदर्थाभ्यां 'ष्णुक्' स्यात् । भूष्णुः, जिष्णुः ॥३०॥

**स्था-ग्ला-म्ला-पचि-परिमृजि-क्षेः स्नुः ।५।२।३१॥**

एभ्यः शीलादिसदर्थेभ्यः 'स्नुः' स्यात् । स्थास्नुः, ग्लास्नुः, म्लास्नुः, पक्ष्णुः, परिमार्क्ष्णुः, क्षेष्णुः ॥३१॥

**त्रसि-गृधि-धृषि-क्षिपः क्नुः ।५।२।३२॥**

एभ्यः शीलादिसदर्थेभ्यः 'क्नुः' स्यात् । त्रस्नुः, गृध्नुः, धृष्णुः, क्षिप्नुः ॥

**सन्-भिक्षा-ऽऽशंसेरुः ।५।२।३३॥**

शीलादिसदर्थात् सन्नन्ताद् भिक्षा-ऽऽशंसिभ्यां च 'उः' स्यात् । लिप्सुः, भिक्षुः, आशंसुः ॥३३॥

**विन्द्विच्छू ।५।२।३४॥**

शीलादिसदर्थाभ्यां वेत्तीच्छतिभ्याम् -'उः' यथासङ्ख्यं 'नुपान्त्य च्छान्तादेशौ च' निपात्येते । विन्दुः, इच्छुः ॥३४॥

**शृ-वन्देरारुः ।५।२।३५॥**

आभ्यां शीलादिसदर्थाभ्याम् -'आरुः' स्यात् । विशरारुः, वन्दारुः ॥३५॥

दा-ट्धे-सि-शद-सदो रुः ।५।२।३६॥

शीलादिसदर्थेभ्यो दारूप-ट्धे-सि-शद-सद्भ्यो 'रुः' स्यात्। दारुः, धारुः, सेरुः, शद्रुः, सद्रुः ॥३६॥

शीङ्-श्रद्धा-निद्रा-तन्द्रा-दयि-पति-गृहि-स्पृहेरालुः ।५।२।३७॥

एभ्यः शीलादिसदर्थेभ्य 'आलुः' स्यात्। शयालुः, श्रद्धालुः, निद्रालुः, तन्द्रालुः, दयालुः, पतयालुः, गृहयालुः, स्पृहयालुः ॥३७॥

ङौ सासहि-वावहि-चाचलि-पापतिः ।५।२।३८॥

शीलादिसदर्थानां सहि-वहि-चलि-पतां यङन्तानां ङौ सति यथासङ्ख्यमेते निपात्यन्ते। सासहिः, वावहिः, चाचलिः, पापतिः ॥३८॥

सस्रि-चक्रि-दधि-जज्ञि-नेमिः ।५।२।३९॥

एते शीलादौ सदर्थाद् द्व्युक्तमन्तो ङ्यन्ता निपात्यन्ते। सस्रिः, चक्रिः, दधिः, जज्ञिः, नेमिः ॥३९॥

शॄ-कम-गम-हन-वृष-भू-स्थ उकण् ।५।२।४०॥

शीलादिसदर्थेभ्य एभ्य 'उकण्' स्यात्। शारुकः, कामुकः, आगामुकः, घातुकः, वर्षुकः, भावुकः, स्थायुकः ॥४०॥

लष-पत-पदः ।५।२।४१॥

शीलादिसदर्थेभ्य एभ्य 'उकण्' स्यात्। अभिलाषुकः, प्रपातुकः उपपादुकः ॥४१॥

भूषा-क्रोधार्थ-जु-सृ-गृधि-ज्वल-शुचश्चानः ।५।२।४२॥

भूषार्थेभ्यः क्रोधार्थेभ्यो ज्वादेर्लषादेश्च शीलादिसदर्थेभ्यो-'ऽनः' स्यात्। भूषणः, क्रोधनः, कोपनः, जवनः, सरणः, गर्द्धनः, ज्वलनः, शोचनः, अभिलषणः, पतनः, अर्थस्य पदनः ॥४२॥

चल-शब्दार्थादकर्मकात् ।५।२।४३॥

चलार्थात् शब्दार्थाच्च धातोः शीलादिसदर्थादकर्मकाद्-'अनः' स्यात्। चलनः, रवणः। अकर्मकादिति किम्? पठिता विद्याम् ॥४३॥

इ-ङितो व्यञ्जनाऽऽद्यन्तात् ।५।२।४४॥

व्यञ्जनमादिरन्तश्च यस्य तस्मादिदितो ङितश्च धातोः शीलादिसदर्थाद्-'अनः' स्यात्। स्पर्द्धनः, वर्त्तनः। व्यञ्जनाद्यन्तादिति किम्? एधिता, शयिता। अकर्मकादित्येव– वसिता वस्त्रम् ॥४४॥

न णिङ्-य-सूद-दीप-दीक्षः ।५।२।४५॥

णिङन्ताद् यन्तात् सूदादिभ्यश्च शीलादिसदर्थेभ्यो'-ऽनो न' स्यात्। भावयिता, क्ष्मायिता, सूदिता, दीपिता, दीक्षिता ॥४५॥

द्रम-क्रमो यङः ।५।२।४६॥

शीलादिसदर्थाभ्यां यङन्ताभ्यामाभ्याम्-'अनः' स्यात्। दन्द्रमणः, चङ्क्रमणः॥

यजि-जपि-दंशि-वदादूकः ।५।२।४७॥

एभ्यो यङन्तेभ्यः शीलादिसदर्थेभ्य 'ऊकः' स्यात्। यायजूकः जञ्जपूकः, दन्दशूकः, वावदूकः ॥४७॥

जागुः ।५।२ ४८॥

शीलादिसदर्थाद् जागुरूकः स्यात्। जागरूकः ॥४८॥

शमष्टकाद् घिनण् ।५।२।४९॥

शीलादिसदर्थेभ्यः शमादिभ्योऽष्टभ्यो 'घिनण्' स्यात्। शमी, दमी, तमी, श्रमी, भ्रमी, क्षमी, प्रमादी, क्लमी ॥४९॥

युज-भुज-भज-त्यज-रञ्ज-द्विष-दुष-द्रुह-दुहाऽभ्याहनः ।५।२।५०॥

शीलादिसदर्थेभ्य एभ्यो 'घिनण्' स्यात्। योगी, भोगी, भागी, त्यागी, रागी,

द्वेषी, दोषी, द्रोही, दोही, अभ्याघाती । अकर्मकादित्येव– गां दोग्धा ॥

आङः क्रीड-मुषः ।५।२।५१॥

शीलादिसदर्थाभ्यामाभ्यां आङ्पूर्वाभ्यां 'घिनण्' स्यात् । आक्रीडी, आमोषी ॥५१॥

प्राच्च यम-यसः ।५।२।५२॥

शीलादिसदर्थाभ्यामाङः प्राच्च पराभ्यामाभ्यां 'घिनण्' स्यात् । प्रयामी, आयामी, प्रयासी, आयासी ॥५२॥

मथ-लपः ।५।२।५३॥

प्रात् पराभ्यामाभ्यां शीलादिसदर्थाभ्या 'घिनण्' स्यात् । प्रमाथी, प्रलापी ॥५३॥

वेश्च द्रोः ।५।२।५४॥

वेः प्राच्च पराद् द्रोः शीलादिसदर्थाद् 'घिनण्' स्यात् । विद्रावी, प्रद्रावी ॥५४॥

वि-परि-प्रात् सर्त्तेः ।५।२।५५॥

एभ्यः पराच्छीलादिसदर्थात् सर्त्ते-'र्घिनण्' स्यात् । विसारी, परिसारी, प्रसारी ॥५५॥

समः पृचैप्-ज्वरेः ।५।२।५६॥

शीलादिसदर्थाभ्यां समः पराभ्यां पृणक्ति-ज्वरिभ्यां 'घिनण्' स्यात् । संपर्की, संज्वरी ॥५६॥

सं-वेः सृजः ।५।२।५७॥

शीलादिसदर्थात् संविभ्यां परात् सृजे'-र्घिनण्' स्यात् । संसर्गी, विसर्गी ॥

सं-परि-व्यनु-प्राद् वदः ।५।२।५८॥

शीलादिसदर्थादेभ्यः परात् वदे'-र्घिनण्' स्यात्। संवादी, परिवादी, विवादी, अनुवादी, प्रवादी ॥५८॥

**वेर्विच-कत्थ-स्रम्भ-कष-कस-लस-हनः ।५।२।५९॥**

शीलादिसदर्थेभ्यो विपूर्वेभ्य एभ्यो 'घिनण्' स्यात्। विवेकी, विकत्थी, विस्रम्भी, विकाषी, विकासी, विलासी, विघाती ॥५९॥

**व्यपाऽभेर्लषः ।५।२।६०॥**

एभ्यः परात् लषेः शीलादिसदर्थाद् 'घिनण्' स्यात्। विलाषी, अपलाषी, अभिलाषी ॥६०॥

**सम्-प्राद् वसात् ।५।२।६१॥**

आभ्यां पराद् वसतेः शीलादिसदर्थाद् 'घिनण्' स्यात्। संवासी, प्रवासी ॥६१॥

**समत्यपाऽभि-व्यभेश्चरः ।५।२।६२॥**

एभ्यः परात् चरेः शीलादिसदर्थाद् 'घिनण्' स्यात्। सञ्चारी, अतिचारी, अपचारी, अभिचारी, व्यभिचारी ॥६२॥

**समनु-व्यवाद् रुधः ।५।२।६३॥**

एभ्यः पराच्छीलादिसदर्थाद् रुधो 'घिनण्' स्यात्। संरोधी, अनुरोधी, विरोधी, अवरोधी ॥६३॥

**वेर्दहः ।५।२।६४॥**

विपूर्वात् शीलादिसदर्थाद् दहे'-र्घिनण्' स्यात्। विदाही ॥६४॥

**परेर्देवि-मुहश्च ।५।२।६५॥**

परिपूर्वाभ्यां शीलादिसदर्थाभ्यामाभ्यां दहेश्च 'घिनण्' स्यात्। परिदेवी, परिमोही, परिदाही ॥६५॥

**क्षिप-रटः ।५।२।६६॥**

परिपूर्वाभ्यामाभ्यां शीलादिसदर्थाभ्यां 'घिनण्' स्याद् । परिक्षेपी, परि-राटी ॥६६॥

**वादेश्च णकः ।५।२।६७॥**

परिपूर्वात् शीलादिसदर्थाद् वादयतेः क्षिप-रटिभ्यां च 'णकः' स्यात् । परिवादकः, परिक्षेपकः, परिराटकः ॥६७॥

**निन्द-हिंस-क्लिश-खाद-विनाशि-व्याभाषाऽसूयाऽनेक-स्वरात् ।५।२।६८॥**

एभ्यः शीलादिसदर्थेभ्यो 'णकः' स्यात् । निन्दकः, हिंसकः, क्लेशकः, खादकः, विनाशकः, व्याभाषकः, असूयकः, चकासकः ॥६८॥

**उपसर्गाद् देवृ-देवि-क्रुशः ।५।२।६९॥**

उपसर्गात् परेभ्यः शीलादिसदर्थेभ्य एभ्यो 'णकः' स्यात् । आदेवकः, परिदेवकः, आक्रोशकः ॥६९॥

**वृङ्-भिक्षि-लुण्टि-जल्पि-कुट्टाट्टाकः ।५।२।७०॥**

एभ्यः शीलादिसदर्थेभ्य-'ट्टाकः' स्यात् । वराकी, भिक्षाकः, लुण्टाकः, जल्पाकः, कुट्टाकः ॥७०॥

**प्रात् सू-जोरिन् ।५।२।७१॥**

आभ्यां प्रात् पराभ्यां शीलादिसदर्थाभ्याम्-'इन्' स्यात् । प्रसवी, प्रजवी ॥

**जी-दृ-क्षि-विश्रि-परिभू-वमा-ऽभ्यमव्यथः ।५।२।७२॥**

एभ्य. शीलादिसदर्थेभ्य 'इन्' स्यात् । जयी, अत्ययी, आदरी, क्षयी, विश्रयी, परिभवी, वमी, अभ्यमी, अव्यथी ॥७२॥

**सृ-घस्यदो मरक् ।५।२।७३॥**

एभ्यः शीलादिसदर्थेभ्यो 'मरक्' स्यात् । सृमरः, घस्मरः, अद्मरः ॥७३॥

**भञ्जि-भासि-मिदो घुरः ।५।२।७४॥**

एभ्यः शीलादिसदर्थेभ्यो 'घुरः' स्यात् । भङ्गुरम्, भासुरम्, मेदुरम् ॥

वेत्ति-च्छिद-भिदः कित् ।५।२।७५॥

एभ्यः शीलादिसदर्थेभ्यः, 'कित्' घुरः स्यात् । विदुरः, छिदुरः, भिदुरः ॥

भियो रु-रुक-लुकम् ।५।२।७६॥

एभ्यः शीलादिसदर्थाद् भियः 'कित एते' स्युः । भीरुः, भीरुकः, भीलुकः ॥७६॥

सृ-जीण्-नशष्ट्वरप् ।५।२।७७॥

एभ्यः शीलादिसदर्थेभ्यः 'कित् ट्वरप्' स्यात् । सृत्वरी, जित्वरी, इत्वरः, नश्वरः ॥७७॥

गत्वरः ।५।२।७८॥

गमे-'ष्ट्वरप्, मश्च त्' निपात्यते । गत्वरी ॥७८॥

स्म्यजस-हिंस-दीप-कम्प-कम-नमो रः ।५।२।७९॥

एभ्यः शीलादिसदर्थेभ्यो 'रः' स्यात् । स्मेरम्, अजस्रम्, हिंस्रः, दीप्रः, कम्प्रः, कम्रः, नम्रः ॥७९॥

तृषि-धृषि-स्वपो-नजिङ् ।५।२।८०॥

एभ्यः शीलादिसदर्थेभ्यो 'नजिङ्' स्यात् । तृष्णक्, धृष्णक्, स्वप्नजौ ॥

स्थेश-भास-पिस-कसो वरः ।५।२।८१॥

एभ्यः शीलादिसदर्थेभ्यो 'वरः' स्यात् । स्थावरः, ईश्वरः, भास्वरः, पेस्वरः, विकस्वरः ॥८१॥

यायावरः ।५।२।८२॥

यातेर्यङन्तात् शीलादिसदर्थाद् 'वरः' स्यात् । यायावरः ॥८२॥

दिद्युद्-दद्दृद्-जगज्जुहू-वाक्-प्राड्-धी-श्री-द्रू-स्रू-ज्वायतस्तू-कटप्रू-परिव्राड्-भ्राजादयः क्विप् ।५।२।८३॥

एते 'क्विबन्ताः' शीलादौ सत्यर्थे निपात्यन्ते । दिद्युत्, दद्दत्, जगत्, जुहूः, वाक्, तत्त्वप्राट्, धीः, श्रीः, शतद्रूः, स्रूः, जूः, आयतस्तूः, कटप्रूः, परिव्राट्, विभ्राट्, भाः ॥८३॥

**शं-सं-स्वयं-वि-प्राद् भुवो डुः ।५।२।८४॥**

एभ्यः पराद् भुवः सदर्थाद् 'डुः' स्यात् । शम्भुः, सम्भुः, स्वयम्भुः, विभुः, प्रभुः ॥८४॥

**पुव इत्रो दैवते ।५।२।८५॥**

सदर्थात् पुवो दैवते कर्त्तरि 'इत्रः' स्यात् । पवित्रोऽर्हन् ॥८५॥

**ऋषि-नाम्नोः करणे ।५।२।८६॥**

ऋषि-संज्ञयोः सदर्थात् पुवः करणे 'इत्रः' स्यात् । पवित्रोऽयमृषिः, दर्भः पवित्रः ॥८६॥

**लू-धू-सू-खनि-चर-सहाऽर्तेः ।५।२।८७॥**

एभ्यः सदर्थेभ्यः करणे 'इत्रः' स्यात् । लवित्रम्, धवित्रम्, सवित्रम्, खनित्रम्, चरित्रम्, सहित्रम्, अरित्रम् ॥८७॥

**नी-दाव्-शसू-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-पा-नहस्त्रट् ।५।२।८८॥**

एभ्यः सदर्थेभ्यः करणे 'त्रट्' स्यात् । नेत्रम्, दात्रम्, शस्त्रम्, योत्रम्, योक्त्रम्, स्तोत्रम्, तोत्त्रम्, सेत्रम्, सेक्त्रम्, मेढ्रम्, पत्त्रम्, पात्री, नध्री ॥८८॥

**हल-क्रोडाऽऽस्ये पुवः ।५।२।८९॥**

सदर्थात् पुवो हल-क्रोडयोर्मुखे करणे 'त्रट्' स्यात् । पोत्रम् ॥८९॥

**दंशेस्त्रः ।५।२।९०॥**

सदर्थाद् दंशेः करणे 'त्रः' स्यात् । दंष्ट्रा ॥९०॥

